पुनर्वज्ञ हीरकं १४ चतुर्दशभेदा ७४ हरिताल १५ हिङ्गुलु १६ मनसिला १७ प्रसिद्धा सीसकोधातु विशेषो जसदइति लोके १८ अञ्जनं सुरमकं १९ प्रवालं विद्रुमं २० अभ्रपटलं भोडलइति प्रसिद्धः २१ अभ्रवालुका अभ्रपटलमिश्रावालुका अभ्रवालुका २२ बादरकाये बादर पृथ्वीकायेऽमीभेदा उक्ताः अथ मण्यभिधाना अपि पृथिवी अस्ति तस्मान्मणभिधानानिमणीनां नामान्युच्यते मणिभेदा अपि पृथ्वीभेदा एवेत्यर्थः ७५ कानितानि मणिनामानि गोमयकोगोमेधमणिः १३ च पुनरुचकोरुचकनामामणि १४ अङ्करत्न १५ स्फटिकरत्नं १६ लोहिताख्योमणिः १७ मरकतमणिः १८ मसारगल्लश्च १९ भुजगमो च कोमणि २० च पुनरिन्द्रनीलरत्नं २१ ७२ चन्दनो २१ गैरिकनामा मणिः २२ हंसगर्भः २४ पुलक २५ पुनः सौगधिको मणिर्बोध्यः २६ चन्द्रप्रभ २७ वैडूर्योमणिः २८ जलकान्तोमणिः २९ सूर्यकान्तोमणिः ४० ७७ अत्र एतासुगाथासुखरपृथिव्याः षड्त्रिंशद्भेदा उक्ताः गणनायां तु चत्वारिंशद्भेदा सञ्जातास्तत्कथं तत्रोत्तरं अत्र हि रत्नानां केचिद्भेदाः केषुचिद्रत्नभेदेषु अन्तर्भवन्ति तस्मान्नात्रकश्चिद्वीतरागवचनेषु दोषावकाशः ७७

सूत्र

जण प्पवाले । अब्भपडलब्भ वालुय बायरकाए मणिविहाणा ७५ ॥ गोमिज्जएय रुयगे अंके फलिहेय लोहियक्खेय। मरगय मसारगल्ले भुयमोयग इंदनीलेय ७६ ॥ चंदण गेरुय हंसगब्भे पुलएय सोगंधिएय बोधव्वे । चंदप्पह वेरुलिए

भाषा

सर्व ७४ गोमेय्यरत्न २३ रूचकरत्न २४ अंकरत्न २५ फीटकरत्न २६ लोहिताचरत्न २७ मरकतरत्न २८ मसारगल्लरत्न २९ भूजमोचकरत्न ३० इंद्र नीलरत्न ३१ ७५ चंदनरत्न ३२ गेरुकरत्न ३३ हंसगगर्भरत्न ३४ पुलकरत्न ३५ सोगंधीकरत्न जाणवो ३६ चंद्रप्रभरत्न ३७ वैडूर्यरत्न ३८ जलकांत रत्न ३९ सूर्यकांति रत्न ४० ७६ एसर्वखर पृथवीनाभेद छत्तीस कह्या तीर्थंकरे एके प्रकारे परं घणे प्रकारे मही सूक्ष्म पृथिवीना जीवते सूक्ष्म बादर

उत्कृष्ट असख्य काल,यावत्तिष्टति जघन्य तु अन्तर्मुहूर्त्तं तिष्टति इति भाव इत्य द्विविधाया अपि स्थिति रा॥८ सपर्यवसितलमुक्त अथ कालस्यान्त र्गत एव कालातरमाह (अणन्तकाल मुक्कोस अन्तोमुहुत्त जहन्निय विजढम्मिसएकाए पुढवीजीवाण अन्तर ८२) पृथ्वीजीवाना स्वकीयेकायेविजढ मि इति त्यक्ते सति उत्कृष्ट अनन्त काल अन्तर भवति जघन्यक अन्तर अन्तर्मुहूर्त्तं भवति कोर्थं यदाहि पृथ्वीकायस्योजीव पृथ्वीकायात् च्युत्वा अपरस्मिन् काये उत्पद्येत ततश्च्युत्वा पुन पृथ्वीकाये एव उत्पद्येत तदाकियदन्तर भवति उत्कृष्ट अनन्तकाल जघन्य अन्तर्मुहूर्त्तं यदा पृथ्वीजीवस्य पृथ्वीकायात् च्युतिर्भूत्वायनस्पति काये उत्पत्ति स्यात्तदा अनन्तकालस्यान्तर जायते वनस्पति कायस्य जीवस्य अनन्तकालस्थितित्वात् जघन्य अन्तरं अन्तर्मुहूर्त्तं भवति ८२ एतान्येव भावत आह [एएसिवन्नओचेव गन्धओरसफासओ सठाणादेसओवावि विहाणाइसहस्ससो ८३] एतेषा पृथ्वीजीवाना वर्णतोगन्धतोरसत स्पर्शत सस्थानतयापि सहस्रशोविधानानि भेदाभवन्ति सहस्रग्रहणमुपलक्षण वर्णादितारतम्यस्य बहुभेदत्वेन असख्याभेदत्वात्



अओ ८२ ॥ अणतकाल मुक्कोस अतोमुहुत्त जहन्नय । विजढमि सए काए पुढवि जीवाण अतर ८३ ॥ एएसि वन्नओ चेव गधओ रस फासओ । सठाणा देसओवावि विहाणाइ सहस्ससो ८४ ॥ दुविहा आउ जीवाओ सुहुमा बायरा



गध थकी फरसथकी रसथकी सस्थानना आदेशथकी पणिए सस्थानना भेद भेदातरथकी विधानभेद सहस्रगमे हुइ सख्याता असख्यात अनत पणे यद्यपि वर्ण ५ गध २ रस ५ फरस ८ छै तथापि तरतम योगे घणाभेदहुइ ८३ बिहु प्रकार अपकायनाजीव सूक्ष्म अने बादर अपकाय तिम बादर पर्याप्ता अपर्याप्ता इमए बिहु प्रकार वली ८४ बादर अप्काय जे पर्याप्ता पाचे प्रकारे कह्या तीर्थं करे मे घनो पाणी तथा ओसनो समुद्रनो डाभ

पय्यवसाईया अपज्जवसियाविय ठिइं पडुच्चसाईयासपज्जवसियाविय ८०] सन्ततिं प्राप्य प्रवाहमाश्रित्य एते सूक्ष्माः बादराच पृथ्वीकायजीवा अनादय आदिरहिताः च पुनरपर्य्यवसिता अपि अन्तरहिता अपि स्थितिं प्रतीत्यभवस्थिति कायस्थिति रूपांस्थितिमाश्रित्य संसारवर्त्तीजीवः ससारे पृथ्वीकायां तवर्त्तीसन् पृथ्वीकाये कियत्कालं तिष्टति इति स्थिति विचारमाश्रित्यजीवाः सादिकाः सपर्यवसितायापि वर्त्तन्ते ८० [बावीस सहस्साइं वासाएक्कोसियाभवे आउठिई पुढवीण अन्तोमुहुत्तं जहन्निया ८१] [असंखकालमुक्कोसं अंतोमुहुत्तं जहन्निया कायठिई पुढवीणं त काय तु अमुञ्चओ ८२] पृथ्वीनां पृथ्वीकाय जीवानां वर्षाणा द्वाविंशति सहस्राणि उत्कृष्टा आयु स्थितिर्भवेत् जघन्यिका च अन्तमुहूर्त्त स्थितिर्भवेत् ८२ भवस्थिति उक्ताकायस्थिति वदति असंखेति पृथ्वीनां इति पृथ्वीकायजीवानां पृथ्वीकायं अमुञ्चतां पृथ्वीकायेस्थिति संसारेचेद्भवति तर्हि उत्कृष्टा असंख्यकालं स्थितिर्भवेत् जघन्यका च अन्तमुहूर्त्त स्थितिर्भवेत् कोर्थः यदि पृथ्वीकायस्थोजीव पृथ्वीकायतश्च्युत्वापुनः पुनर्निरन्तरं पृथ्वीकाये एव उत्पद्यते तदा

सूत्र

अपज्जवसियाविय। ठिईपडुच्च साईया सपज्जवसियाविय ८०॥ बावीस सहस्साइं वासाणुक्कोसिया भवे। आउ ठिई पुढवीणं अंतोमुहुत्तं जहन्निया ८१॥ असंख काल मुक्कोस अंतोमुहुत्तं जहन्नियं। कायठिई पुढवीणं तंकायंतु अमु

भाषा

बावीस हजार वरिस उत्कृष्टी हुई आउखानीथिति थकी पृथवीनी अंतर्मूहूर्त्तनी जघन्यस्थिति ८० असख्याता कालनी अंतरपडे तो उत्कृष्टो अंतमूहूर्त्त जघन्य अंतर कायस्थिति पृथीवी पृथवीनो पृथिविमाहिएम तेहनी कायने मूंके वार वार तेहने ते माही रहे ८१ अनताकालनो अंतर उत्कृष्टो अंतमुहूर्त्त जघन्य अंतरे पोताने पृथिवीने विजढमि छांडे थके पृथिवीना जीवने पृथिवी पणे अंतर पडतु ८२ ए पृथिवी कायनावर्ण थकी

स्थिति कायस्थिति चाश्रित्यसादिकास्तथा सपर्यवसिता अवसानसहिता अपि वर्त्तन्ते ८८ (सत्तेव सहस्साइं वासाणु क्कोसियाभवे आउठिइ आऊण अन्तोमुहुत्त जहन्निय ८९) अपा अप्काय जीवानां सप्तैव सहस्राणि वर्षाणामुत्कृष्टा आयुष स्थितिर्भवेत् जघन्यत अन्तर्मुहूर्त्तं भवेत् ८९ (असखकाल मुक्कोस अन्तोमुहुत्त जहन्नियाकाय ठिइ आऊण त काय तु अमुचओ ९०) अपा अप्काय जीवाना त स्वकाय अर्थात् अपकाय अमुचता उत्कृष्टाकाय स्थिति असख्यकाल भवति जघनिका कायस्थितिरन्तर्मुहूर्त्तं भवति ९० [अणन्तकाल मुक्कोस अन्तोमुहुत्त जहन्नय विजढंमि सए काए आउजीवाण अन्तर ९१] अपजीवाना स्वकीयेकायेत्यक्ते सति अपरस्मिन् काये उत्पद्यपुन स्वकीयेकाये उत्पत्तिस्यात्तदा उत्कृष्ट अन्तर अनन्तकाल भवति जघनग्या अन्तर अन्तर्मुहूर्त्तं भवति वनस्पति कायेजीवोऽनन्तकालन्तिष्टति तदा अनन्तकाल अन्तर भवति इति भाव ९२ [एएसिवणओचेव गन्धओरसफासओ



संतइ पप्पणाईया अपज्जवसियावि य । ठिइंपडुच्च साईया सपज्जवसियावि य ८८॥ सत्तेव सहस्साइं वासाणु क्कोसिया भवे । आउ ठिई आऊण अंतोमुहुत्त जहन्निया ८९ । असंखकाल मुक्कोस अंतोमुहुत्त जहन्निय । कायठिई आऊण त कायतु अमु चओ ९० । अणतकाल मुक्कोस अंतोमुहुत्त जहन्नयं । विजढ मि सए काए आउ जीवाण अंतर ९१ । एए



आदिछे अने सपर्यवसित सात पुणनिश्चे ८७ सात सहस्र वरसनी उत्कृष्टी हुइ आउषाणीनी स्थिति अप्काय जीवनी अतर्मूहूर्त्त जघन्य ८८ असख्यात कालउत्कृष्टे अतर्मुहूर्त्त जघन्य यथे कायस्थिति अप्कायनी तेहनो ते माहितो ते काया अणछोडतु ८९ अनतुकाल उत्कृष्टो अतर्मुहूर्त्त जघन्ये पोतानीकाया छांडया थयो अपकाय जीवनें एतलो आतरो हुइ ९० ए अपकाय जीव वर्णथकी ग धथकी रसथकी फरसथकी स स्थानाभेदथकी

वर्णादीनां भावरूपत्वात् ८३ अथ अप्कायभेदानाह [दुविहा आउ जीवाउ सुहुमा बायरा तहा पज्जत्त मपज्जत्ता एवमेए दुहापुणो ८४] [बायरा जे उपज्जत्ता पञ्चहाते पकित्तिया सुद्धोदए य उस्से य हरितणू महिया हिमे ८५] (एगविह मनाणत्ता सुहुमा तत्थ वियाहिया सुहुमा सव्वलोयसि लोयदेसेय बायरा ८६) तिसृणां गाथानां अर्थ· अप्जीवास्तु द्विविधा· सूक्ष्मा स्तथा बादरा अपि पर्याप्ता अपर्याप्तास्तद्विविधा पुनर्वर्त्तन्ते इति शेषः ८४ अथ पुनर्बादरायेपर्याप्ता अप्जीवास्ते पञ्चधा प्रकीर्त्तिताः शुद्धोदकं मेघसमुद्रादेर्जल अवश्याय शरदादिषु ऋतुषु प्राभातिक सूक्ष्मवर्षारूप· हरितस्निग्ध पृथ्वीभवरूणाग्रविन्दुः ३ महिकाजलं गर्भमासेषु सूक्ष्मा धूसरूपाः हिमे इति हिमजलं खन्धारदेशादौ प्रसिद्धं ८५ तत्र सूक्ष्मा अप्कायजीवा एकविधा अनानात्वास्तीर्थकरैर्व्याख्याताः तत्र सूक्ष्मा अप्काय जीवाः सर्वस्मिन् चतुर्दश रज्ज्वात्मलोके वर्त्तन्ते· बादरा अप्काय जीवालोकस्यैकदेशेवर्त्तन्ते ८७ (सन्तइं पप्पणाईया अपज्जवसियावि य ठिइं पडुच्चसाईया सपज्जव सियावि य ८८) सन्ततिं प्रवाहमार्गमाश्रित्य अप्काय जीवा अनादिका· पुनरपर्यवसिता अपि स्थितिं भव

सूत्र

**तहा। पज्जत्त मपज्जत्ता एवमेए दुहापुणो ८५। बायरा जेउपज्जत्ता पंचहा ते पकित्तिया। सुद्धोदए य उस्से य हरतणु महिया हिमे ८६॥ एगविह मनाणत्ता सुहुमा तत्थ वियाहिया। सुहुमा सव्वलोगंमि लोगदेसेय बायरा ८७॥**

भाषा

ऊपरि पाणीधु अरि ४ छीम जमइ ८५ एके प्रकारे पणि नाना प्रकारे नही सूक्ष्म अप्कायना जीव तीर्हां कह्या तीर्थंकरे सूक्ष्म अप्कायना जीव सर्वलोक चौद राज व्यापी रह्याछे लोकना एकदेस सरोवरादिकने बिखे बादर अप्कायछे ८६ प्रवाह मार्ग जोई तिवारेए सुच्म बादर पृथिवी अनादिछे अने अपर्यवसित छेहडो ते पृथिवी जीवनो भव स्थिति भवे रहिवो काय थिति काया रहिवो ते आश्री

तेपकित्तिया रुक्खागुच्छाय गुम्माय लया वल्लीतयातहा ८५) तत्र साधारणशरीरवनस्पति प्रत्येक शरीरवनस्पत्योर्मध्ये प्रत्यकवनस्पति जोवास्तु अनेकधा प्रकोर्त्तितास्तेप्रत्यत्ते द्वथा १ सहकारादय गुच्छा हन्ताककण्टकारिकाद्या २ गुल्मा नवमालती प्रमुखा ३ लताश्चम्पकाद्या४ वल्य कूष्माण्डाद्या ५ तथातृणा कुशाद्या ६ ८५(वलयापव्वयाकुहणाजलरुहाओसहीतहाहरियकायबोधव्वापत्तेयाइतिआहियाद८६)वलयानालिकर कदलाद्या इहतेषां शाखा न्तराभावेनलताकपत्व उक्त ७ पर्व्वजाइक्षाद्या ८ कुहना भूमि स्फोटाद्या ९ जलरुहा कमलाद्या १० तथा अपधय शालि प्रमुखा ११ च पुनर्हरित कायायतण्डुलोयकाद्या १२ बोधव्या इति अमुनाप्रकारेण प्रत्येकाप्रत्येकवनस्पति जोवा आख्याता ८६ (साहारण सरीराओणेगहातेपकित्तिया आलुएमूल एचेय सिङ्गवेरेतहेवय८७] (हिरिलोसिरिल्लोसिस्सरिलिजावईकेय कन्दलोपलण्डुलसणकन्देय कन्दलीयकुहुव्वए८८)(लोहिणोहूयथीहूय तुहगा यतहेयय कन्हेय वज्जकन्दे कन्दे सूरणएतहा ८९] [अस्सकन्नोय बोधव्वा सोहकन्नोतहेवय मुसण्डीयहलिद्दियणेगहा एयमाइओ १००] अथ च तस्मिं गाथाभि साधारणवनस्पतोना नामान्याह ये तु साधारण शरीरा साधारण वनस्पति जोवा अनन्तकायवनस्पति जीवास्तेपि अनेकधा अनेक

वलया पव्वया कुहणा जलरुहा ओसहीतणा। हरीयकायाय बोधव्वा पत्तेयाइति आहिया८६। साहारण सरीराओ णेगहा ते पकित्तिया। आलुए मूलए चेव सिंगवेरे तहेवय ८७। हिरिली सिरिली सिस्सिरिली जावई केय कदली।

भाषा

रण शरीरछे जेहने ते अनेकप्रकारे कह्या आलूकदजातो १ मूलम २ सिंगवेर आर्दो तिमज ३ ८६ हरिलोकद ४ सिरिलोकद ५ सिस्सरो कद ६ जावइयकेय कद जाति ७ पलंडुकद ८ लसणकद ९ कदलोय कुहुव्वए कद ८७ रोहिणीकद ११ हुयथो कद १२ हुय कद १२

सण्ठाणादेसओवावि विहाणाइसहस्ससो८२] एतेषा अप्कायजीवाना वर्णतोगन्धतः रसत स्पर्शतः सस्थानादेशतश्चापि सस्थाननामतश्चापि सहस्रसोवह वोभेदाभवन्ति ८२ अथ वनस्पति जीवानाह [दुविहावणस्सई जीवासुहुमावायरातहा पज्जत्तमपज्जत्ता एवमेव दुहापुणो ८३] वनस्पति जीवाद्विविधाः सूक्ष्मास्तथा बादराः ते सूक्ष्मा बादराश्चापि पर्याप्ता अपर्याप्ताश्च द्विविधा आख्याताः ८३ [बायराजेउ पज्जत्ता दुविहा ते वियाहिया साहारण सरीराय पत्तेयगाय तहेवय ८४]येबादरावनस्पति जीवास्तेपि द्विविधाव्याख्याताः साधारण शरीराश्च पुन प्रत्येकाः वनस्पति जीवाः ८४(पत्तेय सरीराओणेगहा

सूत्र

सिं वन्नओ चेव गंधओ रस फासओ। संठाणा देसओवावि विहाणाइं सहस्ससो८२। दुविहा वणस्सई जीवा सुहुमा वायरा तहा। पज्जत्त मपज्जत्ता एवमेए दुहापुणो ८३। वायरा जेउ पज्जत्ता दुविहा ते वियाहिया साहारण सरीराय पत्तेगाय तहेवय ८४। पत्तेय सरीराओ णेगहा ते पकित्तिया। रुक्खा गुच्छाय गुम्माय लयावल्ली तणातहा८५।

भाषा

विधानभेद हजारे गमिहोइ ८१ विहुंप्रकारे वनस्पतीना जीव सूक्ष्म वादर तथावली एक पर्याप्ता बीजा अपर्याप्ता एम बिहुंभेदे पुवे वली ८२ वादर वनस्पतिकायते पर्याप्ता विहुभेदे ते कह्या तीर्थंकरे अनता जीवने साधारण सामान्य शरीर ते अनतकाय प्रत्येक जूवा शरीर जेहना ते प्रत्येक तिमज ८३ ते माहि प्रत्येक शरीर वनस्पतिना जीवछे ते माहि प्रत्येक शरीर वनस्पतीना रुख आम्रादि १ ए ताक गुच्छ[illegible] आदि २ गुल्म वन मालती आदि तथा चांपा ४ वेलितृं सडी प्रमुख तृण भीभुयादि तथावली ६ ८४ वनयनालिकेरी आदि ७ पर्वगसेलडी आदि ८ कुंदगमुंद फोडादि९ कमलादिया जलरुह १० औषधीसाली प्रमुख ११ तंदुलेयादि हरीकायजाणवी प्रत्येक वनस्पति कह्यो तीर्थंकरे ८५ अनता जीवने साधा

पुरद्वारे प्रविशन्तं साधुं दृष्टवान् हस्तिस्कन्धा दुत्तीर्य क्षणं स्तं ववन्देतेनवन्द्यमानोऽयं साधुरेकेनेभ्येन दृष्टः चिन्तितं च तेन अहो एष महात्मा क्षणेन वन्द्यते एव चिन्तयत एव तस्य गृहे ढण्ढणर्षिः प्रविष्ट स्तेन मोदकैः प्रतिलाभितः ततः स्वामिसमीपे गत्वा पृच्छति मम लाभान्तराय चीणः स्वामिना उक्तं एष वासुदेवलाभः मम परलाभो न कल्पते इत्युक्त्वा नगरा द्वहिर्गत्वा उचितस्थण्डिले मोदकान् विधिना परिष्ठापयन् शुभध्यानारोहेण केवलीजातः एव मन्यैरपि अलाभपरीषहः सोढव्यः अलाभात् अनिष्टाहारलाभात् अन्त्याहार प्रान्त्याहार भोजनात् शरीरे रोगा उत्पद्यन्ते अतो रोगपरीषहोपि सोढव्य स्ततो रोगपरीसहमाह नच्चा उप्पइयं दुक्खं वेयणाए दुहट्ठिए अदीणो थावए पन्नं पुट्ठो तत्थ हियासए ३२ ति गच्छं नाभिनन्देज्जा सचिक्खत्तगवेसए एयं खुतस्स सामन्नं न कुज्जा न कारवे ३२ वेदनया दुःखार्त्तितो मुनिः अदीन सन् प्रज्ञां स्थापयेत् बुद्धिं स्थिरां कुर्यात्

सूत्र

नच्चा उप्पइयं दुक्खं वेयणाए दुहट्ठिए अदीणो थावए पन्नं पुट्ठो तत्थ हियासए ॥३१॥ तिगिच्छं नाभिनंदेज्जा संचिक्खे-त्त गवेसए एयं खुतस्स सामण्णं जन्न कुज्जा नकारवे ॥३२॥ अचेलगस्स लूहस्स संजयस्स तवस्सिणो तणेसु सुयमाणस्स होज्जा गाय विराहणा ॥३३॥ आयवस्स निवाएणं अउला हवइ वेयणा । एवंनच्चा नसेवंति तंतुजंतण तज्जिया ॥३४॥

भाषा

कुमार अलाभ परिसहसह्यो तिम बीजे सहिवो इति अलाभ ऊपरे दृष्टांत १५ ति० रोगटालिवाने अर्थेना० अनुमोदे नहि स० समाधि सहित अ० चारित्र रूप आत्मानो गवेषक ए० इणी प्रकारेखु० जेभणी त० ते रोगवत साधुने सा० चारित्रपालिवो सही जो जं० जेन पोते नहीकरे म० अनेरापां सेंन करावे ३२ अथ रोगपरीसह दृष्टांत मथुरानगरीइ जितशत्रुराजा कालइसे नामे गणिकाने रूपे मोहे थंते जरमाहिरारिते हने कालवे सनामा

प्रकाराः प्रकीर्त्तिताः तेषा च केषां चित् प्रसिद्धानां नामान्याह आलुक आलूपिण्डालुरक्तालुकाकान्द १ स्तथा मूलकं प्रसिद्धं २ शृङ्गवेरकं आर्द्रकं ३ तथै वच९७ हरिलीनाम्नाकद:४ सिरिलीनामाकद:५ सिस्सिरिली नामापिकान्द ६ एतेकान्दविशेषाः यावति कोपिकान्दविशेष:७कान्दलीकान्द:८ देशविशेषेमांस रूप कान्दो भवति ८ लशुनकान्दसुप्रसिद्ध:१० कुह्नतकादलोकान्दोविशेषः ११ ९८ लोहिनीकान्द १२ हुताक्षीकान्द १३ हुनकान्दः १४ तुहककान्दः १५ कृष्णकान्दः १६ वज्रकान्दः १७ सूरणकान्दस्तथा१८ ९९ अश्वकर्णीकान्दो बोधव्यः१९तथैवसिंहकर्णी २० मुसण्ढीकान्द २१ हरिद्राकान्दः २२ च एवमादिका अनेकधाः कान्दजातयो ज्ञेयाः१००अथ साधारणलक्षणमाह (गूढसिरागं पत्तं सच्छीरंजचहोइनिच्छीरजंपियपणट्ठ सधिंअणन्तजीवं वियाणाहि१एगविह शूक्ष्मावनस्पतिकायजीवाः एकविधाः अनानात्वाव्याख्यातास्तत्रसूक्ष्माः वनस्पतिजीवाः निगोदनामानःसर्वस्मिन्चतुर्दशरज्वात्मलोकेव्याप्ता सन्तिबादरावन स्पतिजीवालोकदेशे अभिव्याप्यस्थिताः सन्तिक्कचित्प्रदेशेभवन्तीत्यर्थः१०१(सन्तइंपप्पणाइयाअपज्जवसियावियठिइंपडुचसाइयासपज्जवसियाविय१०२)

सूत्र

पलंडु लसण कंदेय कंदलीय कुहुव्वए ९८॥ लोहिणी हूयत्थी हूयतुहगाय तहेवय। कन्हेय वज्जकंदेय कंदे सूरणए तहा ९९॥ अस्सकन्नीय बोधव्वा सीहकन्नी तहेवय। मुसंढीय हलिद्दाय णेगहा एवमायओ १००॥ एगविह मणाणत्ता सुहुमा तत्थ वियाहिया। सुहुमा सव्वलोगंमि लोगदेसेय बायरा १०१॥ संतइंपप्प णाईया अपज्जवसियाविय।

भाषा

तुगाय कंद १४ तथावली कृष्ण कंद १५ वज्र कंद १६ सूरण कंद १७ तथावली ९८ अश्वकर्णी कांद १८ जांणिवो सीह कर्णी कंद १९ तिमवली मुसंढी कंद २० हलदकंद २१ ए आदीदेई अनेकप्रकारे अनतकायना जीव ९९ एकज प्रकार परंघणी प्रकारे नही सूक्ष्म तीहां कह्या तीर्थं करे सूक्ष्म

सन्तति प्राप्य एतेवनस्पति जोवा अनादय पुनरपर्यवसिता सन्ति कायस्थिति च प्रतीत्यश्राश्रित्यसादिका सपर्यवसिताश्च सन्ति इत्यर्थ १०२ [दसचेव सहस्साइ वासाणुक्कोसियाभवे वणस्सइण आउन्तु अन्तोमुहुत्त जहन्नय १ ३) वनस्पतीना प्रत्येक वनस्पति जीवाना वर्षाणां दशसहस्राणि उत्कृष्टा आयु स्थितिर्भवेत् जघन्यिकास्थितिश्च अन्तर्मुहूर्त्त भवेत् साधारणाना तु जघन्यत उत्कृष्टतश्च अन्तर्मुहूर्त्त एव स्थिति रस्ति तस्मात् अत्र प्रत्येकवनस्पति जोवानां एव स्थिति र्ज्ञेया१ २ (अनन्तकालमुक्कोस अन्तोमुहुत्त जहन्नय कायठिइपणगाण त काय तु अमु चओ१ ४]पनकाना पनकोप लक्षितफूलणिवनस्पति जोवाना त स्वकीय काय अमुञ्चता कायस्थितिरुत्कृष्टतोऽनन्त काल जघन्यतयान्तर्मुहूर्त्त कायस्थिति र्ज्ञेया कोर्थ यदाहि पनकजोवपनकात् च्युत्वा पुनरनन्तरत्वेनपनकत्वे एव उत्पद्यते तदा एव उत्कृष्टतोऽनन्तकाल तिष्टति जघन्यतोन्तर्मुहूर्त्त एवतिष्टतीति भाव पनकाना च इहसामान्येनपनस्पति जोवात् निर्गोदत्वेन उत्कृष्टतोऽनन्त उच्यते विशेषापेक्षयाहि प्रत्येकवनस्पतीना तथा निगोदाना बादराणा प्रज्ञाणा वा ऽसख्येयकालाएव अवस्थिति उक्त च भगवत्या पत्तेयसरोरवायरवणस्सइकाइयाणभन्ते केवतिय कायठितोपण्णत्ता गोयमा जहन्नेण अन्तोमुहुत्त

ठिइपडच्च साईया सपज्जवसियाविय १०२ ॥ दस चेव सहस्साइ वासाणु क्कोसिया भवे। वणस्सईण आउतु अंतोमुहुत्त जहन्निया १०३ ॥ अणतकाल मुक्कोसा अंतोमुहुत्त जहन्निया। कायठिई पणगाण तकायतु अमु चओ १०४ ॥



जोव चौदराजमाहिलाभि लोकने एकदेसे बादर वनस्पती जोव १ सतति प्रवाहे अपर्यवसित अनतपणि जिणे सदाहुस्येज थिति आश्री आदि सहित अने सपर्यवसित अतसहित१ १ दशहजारवरस उत्कृष्टीथोतिहुइ वनस्पतीकायनो आउखो अंतोमूहूत्त जघ्याइ जघन१०२ अनतकाल उत्कृष्टी अतर्मूहूर्त्त जघनाकायानीस्थिति अनतकायनी ते काय अणमूकतु १ २ दसहजारवरस असख्यातोकाल उत्कृष्टी अतर्मूहूर्त्त जघनेर पोतानीकाया

उक्कोसेण सत्तरिंसागरोवमकोडाकोडीओ निगोदेण भन्ते निओदेत्ति कालतोकेविच्चिरं होन्ति जहन्नेण तं चेवउक्कोसेण असखेज्जं कालमिति १०४ अथ कालस्यांतरमाह [असंखकालमुक्कोसं अन्तोमुहुत्तं जहन्नियं विजढंमिसएकाए पणगजीवाणं अन्तर १०५] पनकाजीवाना स्वकीयेकायेत्यक्ते सति अपरस्मिन् पृथिव्यादिपु कायेपु उत्पद्य पुन पनकत्वेन उत्पद्यमानाना उत्कृष्ट असख्यकालं अन्तर भवति जघनंत्र अन्तर अन्तर्मुहूर्त्तं भवति इति कालांतरं प्रतिपादितं अथ प्रकृति मुपसंहृत्य अग्रेतनं सम्बन्धं सूचयति [एएसिम्बन्नओचेव गन्धओरसफासओ सण्ठाणादेसओवावि विहाणाइं सहस्ससो १०६] एतेषां सूक्ष्मबादरवनस्पति जीवानां वर्णतोगन्धतोरसतः स्पर्शतः सस्थानादेशतयापि सहस्रोविधानानिभवन्ति सहस्रशः शब्देन असख्येया अनन्ताश्चभेदाभवन्तिइत्युच्यते१०६ [इच्चेएथा वरातिविहा समासेण वियाहिया इत्तोयतसेतिविहे वुच्छामि अणुपुव्वसो१०७] इति अमुनाप्रकारेण एतेत्रि

सूत्र

असंखकाल मुक्कोस अंतोमुहुत्तं जहन्नयं। विजढंमि सए काए पणग जीवाणं अतरं १०५॥ एएसिं वन्नओ चेव गंधओ रस फासओ। संठाणा देसओवावि विहाणाइं सहस्ससो१०६॥ इच्चेते थावरा तिविहा समासेण वियाहिया। इत्तोउ तसे तिविहे वोच्छामि अणुपुव्वसो १०७॥ तेऊ वाऊय बोधव्वा ओरालाय तसा तहा। इच्चेए तसा तिविहा तेसिं

भाषा

मूंके जातूं निगोदकाय मूंके पृथिव्यादि माहिजाइ पछे आवेतो अंतरपडे १०४ वनस्पती सूक्ष्म बादर वर्णथकी गधथकी रसथकी फरसथकी संस्थान देशनाभेदथकी विधानभेदसहस्र१०५ ए पूर्वे कह्या ते थावर पृथवी पाणी वनस्पति तीनभेदे सखेपे काह्या तीर्थंकरा एतला कह्यानतरत्र स त्रिहूभेदे कहुंछुं ए वचन भगवंतनुं १०६ तेऊ कायना जीव वाऊकायना जीव उदार मोटा बेंद्रियादित्र स तिम ए पूठे कागा तेत्रस त्रिहूभेदे तेहना भेद

विधास्थावरा पृथ्वी जलवनस्पति जीवातिष्टन्तीत्येवमोक्ता स्थावरा समासेनव्याख्याता विस्तरतोऽमीबहवोभेदा सन्ति इतोऽनन्तरंत्रिविधान् त्रसान् अनु पूर्व्योऽनुक्रमेणवक्ष्यामि १०६ (तेऊवाऊयबोधव्वा ओरालायतसातहा इच्चेएतसातिविहातेसिंभेए सुणेहमे १०८ तेजोयोगास्तेजासि अग्नयस्तद्वर्त्ति नोजीवा अपि तथोक्ता एव वायवय तथा उरालायाइति उदारा एकेन्द्रियापेक्षयास्थूलाद्वीन्द्रियादयश्चत्रसाइत्येते त्रसाखि विधा सन्ति तेषां तेजोवायुद्वीन्द्रिया दीना भेदान् मे कथयतोयूयं शृणुतइति यद्यपि तेजोवाय्वोःस्थावरनामकर्मोदये पित्रसत्व नास्ति ततस्तेजोवाय्वोर्गतिमत्वात् उदाराणा च लब्धितो पित्रसत्व अस्ति यतोहित्रस्यन्ति देशाद्देशान्तरं संक्रामन्तीतित्रसा इति व्युत्पत्ति १ ८ [दुविहातेउजीवायसुहुमाबायरातहा पज्जत्तमपज्जत्ता एवमेए दुहापुणो १०८] तेजोजोवा सूक्ष्मास्तथास्तथाबादराश्च त पुन पर्याप्तापर्याप्तभेदेनद्विविधा सन्ति सूक्ष्मा अग्नि जीवा पर्याप्ता अपर्याप्ताश्चवर्त्तन्ते १०८ [बायराजेउपज्जत्ताणेगहातेवियाहिया इङ्गालेमुम्मुरे अगणी अच्चिजालातहेवय ११०] ये बादरा पर्याप्ता अग्नि जीवास्ते अनेकधाव्याख्याता अङ्गार प्रज्वलितेन्धनखण्डरूप समरोभस्ममिश्रिताग्निकणरूपोग्नि अग्निर्मौलभेदात् अतिरिक्त अर्चिं प्रदीपादेर्ज्वालाच्छिन्नमूला साज्वाला उपरिष्टात् स्फुरन्तो



भेए सुणेह मे १०८ ॥ दुविहा तेउ जीवाओ सुहमा बायरा तहा। पज्जत्त मपज्जत्ता एवमेए दुहा पुणो १०९ ॥ बा
यरा जेउ पज्जत्ता णेगहा ते वियाहिया। इङ्गारे मुम्मुरे अगणी अच्चिजाला तहेवय ११० ॥ उक्का विज्जुय बोधव्वा



सांभलो सुक्ष्मे कहतांप्रत १०७ बिहु प्रकारतेऊकायनाजीव एक सूक्ष्मबीजाबादर तिमपर्याप्तावीजा अपर्याप्ता इम ए बिहु भेदेवली १ ८ बादरदेखता जे अग्निना जीवपर्याप्ता अनेकप्रकारि ते कह्या बलता खीरडा अग्निना कणीया धूमसहित अगनि मूलसहित ते अर्चिज्वाला ऊपरि भडकर बलतो तथा

दृश्यन्ते तथैवेति पद पूरणे ११० [उक्काविज्जुयबोधव्वाणेगहा एवमाइओ एगविह मनाणत्ता सुहमाते वियाहिया १११] उल्काग्नि स्तारावदाकाशात्पतन् योदृश्यते विद्युत्तडिदग्नि एवं आदिक अनेकधाअग्निजीवावोधव्याः तेग्नय सूक्ष्मा एकविधा एव अनानात्वा व्याख्याताः १११ [सुहमासव्वलोगंमि लोगदेसेय बायरा एत्तोकालविभागन्तु तेसि वुच्छंच उव्विह ११२] सूक्ष्माग्नि जीवाः सर्वस्मिन् चतुर्दशरज्ज्वात्मलोकेसन्ति वादरा अग्निकाय जीवालोक देशे चतुर्दशरज्ज्वात्मलोकस्यैकदेशेसार्द्ध द्वितीयद्वीपेसन्ति इति चेतविभागउक्तः इतोऽनन्तरं तेषा अग्निकायजीवानां चतुर्विध कालविभागं वक्ष्ये ११२ [सन्तइपप्पणाइया अपज्जवसियाविय ठिइं पडुच्चसाइया सपज्ज वसियाविय ११३] अग्निकायजीवाः सन्तति माप्य अनादिकाः अनादिरहितास्तथा अपर्यव सिताः स्थितिं प्रतीत्य आयुराश्रित्यसादिकाः सपर्यवसिता अपि अन्तेनापि सहितावर्त्तन्ते ११३ [तिन्नेव अहोरत्ता उक्कोसेण वियाहिया आउ

सूत्र

णेगहा एवमाइओ। एगविह मनाणत्ता सुहुमा ते वियाहिया १११॥ सुहुमा सव्व लोगंमि लोग देसेय बायरा। इत्तो काल विभागंतु तेसिं वोच्छं चउव्विहं ११२॥ संतइंपप्प णाईया अपज्जवसियाविय। ठिईपडुच्च साईया सप ज्जवसियाविय ११३॥ तिन्नेव अहोरत्ता उक्कोसेणा वियाहिया। आउ ठिई तेउणं अंतोमुहुत्तं जहन्नयं ११४॥ असंख

भाषा

वली१०८ तारानोपरि उपरि उपरिथवीपडतीदीसे वीजलीजाणवो अनेकप्रकारे एहआदर एकजभेदछे परवीजोभेदनथीसूक्ष्म अगनिकायनाजाणा११० ते सूक्ष्म अगनि सर्वलोक चौदराज व्यापी रह्याछे एकदेशने विषे वादर एतलानतर कालनो विभाग भेद तेहनो कहिस्युं चिहंप्रकारे १११ प्रवाहि आश्री अनादिछे अंतपणिछे थिति आश्रीसादि सहित अतपणिछे ११२ त्रिणि अहोरात्रि पूर्णप्रहर चोवीस उत्कृष्टीस्थिति कही तीर्थंकरे आउ

ठिइत जण अन्तामुहुत्त जहन्निया ११४) तजसा तेजो जोवाना उत्कृष्टेन त्रोणि अहोरात्राणि आयु स्थिति व्याख्याता जघनिका आयु स्थितिरन्तर्मुहूर्त्तं श्रेयाद्न्यथ ११४ भव स्थिति मुक्ताकाय स्थिति माह ( असखकाल मुक्कोस अन्तोमुहुत्त जहन्नय काय ठिइ ते जण त काय तु अमुचओ ११५ ) तेजसास्तेजस्काय जीवाना स्व काय अमुचता उत्कृष्ट असख्य काल स्थितिर्भवति तेजस्कायस्थो जीवो मृत्वा अनन्तर तेजस्काये एव उत्पद्यते तदा असख्य काल तेजस्काये तिष्टतीत्यर्थं जघन्य अन्तर्मुहूर्त्त तिष्टति ११५ अथ कालस्यान्तर वदति [ अणन्त काल मुक्कोस अन्तो मुहुत्त जहन्नय विजढम्मि सए काए तेज जीवाण अन्तर ११६ ] तेजो जोवाना स्वकीये तेजस्कायेत्यक्ते सति उत्कृष्ट अन्तर अनन्तकाल तेजस्काय जोवा स्वतेजस्कायात् च्युत्वा अपरस्मिन् काये उत्पद्य पुन स्वतेजस्काये उत्कृष्ट अनन्त कालस्यान्ते उत्पद्यते जघन्य अन्तर चेद्भवति तदा अन्तर्मुहूर्त्त भवति नव समया दारभ्य किञ्चिदून घटिकाद्वय अन्तर्मुहूर्त्तं मुच्यते ११६ [ एएसि वन्नओ चेव गधओ रसफासओ सठाणा देसओ वावि विहाणाद सहस्ससो ११७] एतेषा अग्निकाय जोवाना वर्णतो गन्धतो रसत स्पर्शत सस्थाना

सूत्र काल मुक्कोसा अतोमुहुत्त जहन्निया। काय ठिई तेऊण त कायतु अमु चओ ११५॥ अणत काल मुक्कोस अतोमुहुत्त जहन्नय। विजढमि सए काए तेऊ जीवाण अतर ११६॥ एएसि वन्नओ चेव ग धओ रस फासओ। सठाणा देसओ

भाषा स्थानीस्थिति॰अग्निकायनो अतर्मुहूर्त्त जघन्य स्थिति ११३ असख्यातुकाल उत्कृष्टो अतर मूहूर्त्त जघन्य कायास्थिति तेऊ कायनी ते काय अण मूकतां ११४ अनतोकाल उत्कृष्टो अतर्मूहूर्त्त जघनापणे बिछडो पोतानोकायमूकी तेऊ कायना जोवने वलतु अतरहुवे ११५ ए अग्नीकायना वर्ण

देशतस्यापि सहस्रशो विधानानि भेदा भवन्ति११७ (दुविहावाउ जीवाउ सुहमावाय रातहापज्जत्तमपज्जत्ताएवमेए दुहापुणो ११८) वायु जीवा द्विविधा शूक्ष्माबादरास्ते पुनः पर्याप्ता पर्याप्तभेदेन द्विविधासन्ति११८ [वायराजेउपज्जत्तापंचहातेपकित्तियाउक्कलियामंडलियाघणगुंजासुद्धवायाय११९] येबादरा वायुकाय जीवा पर्याप्तास्ते पुनः पञ्चधा प्रकीर्त्तिता पञ्चकथनमातत' वायवोहि अनेकविधाः सन्ति उत्कालिका वायुर्यः स्थित्वा २ वांति १ मण्डलिका वायुः वातूलिकावायुः घनोघनरूपो वायुर्घनवायुः रत्नप्रभाद्यधोवर्त्ती घनोदधिस्तु विमानाना आधारो हिम पटलकल्पोवायुः गुंजन् वातीतिगुंजावायुः शुद्धावायवस्तोक २ येवान्ति ११९ [संवट्टगवा वायणेगहाए वमाईओ एगविहमनाणत्ता सुहुमाते वियाहिया १२०] सवर्त्तक वायवस्ते येर्वायुभिस्तृणा

सूत्र

वावि विहाणाइं सहस्ससो ११७॥ दुविहा वाउ जीवाओ सुहुमा वायरा तहा। पज्जत्त मपज्जत्ता एवमेए दुहा पुणो ११८॥ वायरा जेउ पज्जत्ता पचहा ते पकित्तिया। उक्कलिया मंडलिया घण गुंजा सुद्धवायाय ११९॥ संवट्टग वायायणेगहा एवमाइओ। एगविह मनाणत्ता सुहुमाते वियाहिया १२०। सुहुमा सव्वलोगंमि लोगदेसेय

भाषा

थकी गंधथकी रसथकी फरसथकी संस्थानभेदथकी विधानभेद सहस्र ११६ वेह्नं प्रकारे वाउकायना जीव एक सूक्ष्मनानां विजा बादर ते मोटा तिमज एक पर्याप्ता बीजा अपर्याप्ता एवेह्नं प्रकारे इम ११७ बादर वाउकायना जीव पर्याप्ता पाचे प्रकारे कह्या तीर्थ करे उत्कलिका रही २ वाइते वायमंडली यावंतो लिया घन रूपते घनवातः गुंजता वाइते गुंजवात शुद्धवात ते थोडे थोडे वाये११८ जिणे वायरे तृणादिलेई अनेथिना खेते संवर्त्तक अनेक घणे प्रकारे आदि देईने इत्यादिक एकभेद पणि अनेकप्रकारे नही सूक्ष्म कह्या तीर्थं करे ११९ सूक्ष्म चौदराजमाहि लामे लोकने एकदेसे

दय एकस्मात् स्थानात् स्थानान्तर भीयन्ते एवमादयो अनेकधा व्याख्याता परवायु जाति सामान्येन एक विधा अनानात्वा स्तोर्थ करेसे शूक्ष्मवायु काय जीवा याख्याता १२ (सुहमा सव्वलोयंमि लागदेसेय बायरा एत्तोकाल विभागन्तु तेसिवच्छं चउव्विहं १२१ ) शूक्ष्मा वायुकाय जीवासर्वस्मिन् चतुर्दश रज्वात्म लोकेस्थिता सन्ति बादरा वायुकाय जीवा लोकैक देशेस्थिता सन्ति इति क्षेत्रविभाग उक्त इतो अनन्तर तेषा वायुकाय जीवाना चतुर्विध कालविभाग वक्ष्ये १२१ [सतइ पप्पणाइया अपज्जवसिया विय ठिइ पडुच्च साइया स पज्जवसिया विय १२२] सन्तति प्रवाह मार्गमाश्रित्य वायुकाय जीवा अनादयस्तथा अपर्यवसिता अपि पुन स्थिति प्रतोत्यते सादिका स पर्यवसिताय वर्त्तन्ते १२२ (तिन्नेव सहस्साइ वासाणुक्कोसिया भवे आउठिइ वाउण अतोमुहुत्त जहन्निया १२३) वायुर्ना वायूकाय जीवाना त्रोणिवर्ष सहस्राणि उत्कृष्टा आयु स्थितिर्भवति जघनिका स्थितिरन्त

वायरा। इत्तो काल विभाग तु तेसि वोच्छं चउव्विहं १२१॥ सतइ पप्प णाईया अपज्जव सियाविय। ठिइ पडुच्च साईया सपज्जवसियाविय १२२॥ तिन्नेव सहस्साइ वासाणु क्कोसिया भवे। आउ ठिई वाउण अंतोमुहुत्त जह न्निया १२३॥ असखकाल मुक्कोसा अंतोमुहुत्त जहन्निया। काय ठिई वाउण त कायतु अमु चओ १२४॥ अणत





बादर जीव एतलानतर कालनो विभाग भेद तेहनो चिहु प्रकारे कहस्यु १२० प्रवाह आश्री अनादिक्षे अतपणिक्षे स्थिति आश्रीसादि सहित स पर्यवसित अतर पणिक्षे १२१ त्रिणिहजार वरस उत्कृष्टो स्थिति होइ वाउकानी स्थितिवायरानी अतर्मुहूर्त्त जघन्य स्थिति १२२ असख्याता कालनो उत्कृष्टी अतर्मुहूर्त्त जघन्य कायस्थिति वाउनी वायुथकी मरी वायुमाहि ऊपजै ते वाउकाय मु के नही १२३ अनताकालनो उत्कृष्टी अतर

मुहूर्त्तं भवति १२३ अथ कायस्थितिमाह (असंख कालमुक्कोसं अंतोमुहुत्तं जहन्नयं कायठिई वाऊणं तं कायतु अमुंचओ १२४) वायूना वायुकाय जीवानां स्वंकायं वायुकायं अमुञ्चतां असंख्येय कालं उत्कृष्टास्थितिर्व्याख्याता जघनिएका स्थितिरन्तमुंहूर्त्तं भवति वायुकायात् च्युत्वा पुनर्वायुकाये एव उत्पद्यते तदा उत्कृष्टो असंख्येय कालं जघन्य तयांतमुंहूर्त्तं स्थितिर्व्याख्याता इत्यर्थः१२४ अथ कालस्यान्तरमाह (अणंतकालमुक्कोसं अंतोमुहुत्तं जहन्नियं विजढम्मि सए काए वाऊजीवाण अंतरं १२५) वायुजीवानां स्वकीये कायेत्यक्ते सति उत्कृष्टं अनन्तकालं जघन्यं अन्तमुंहूर्त्तं अन्तरं भवति तदा उत्कृष्टतो अनन्तकालस्यान्तर भवति जघन्यतयांतमुंहूर्त्तं अन्तरं भवति १२५ (एएसिं वन्नओचेव गंधओ रसफासओ संठाण देसओ वावि विहाणाइं सहस्ससो १२६) एतेषां उत्कलिकादि वायुनां वायुकाय जीवानां वर्णतो गन्धतो रसतः स्पर्शतस्संस्थानादेशतयापि सहस्रसो विधानानि बहवोभेदाः भवन्तीत्यर्थः १२६ एवं तेजोवायुत्रसान् उक्त्वा उदारत्रसान् आह (ओराला तसाजेज चउविहाते पकित्तिया बेंदियतेंदिय चउरोपंचिंदिया चेव १२७) ये उदारास्त्रसाद्वीन्द्रियादयस्ते चतुर्विधा प्रकीर्त्तिताः द्वीन्द्रिया१ त्रीन्द्रिया २ चतुरिन्द्रियाः ३ पञ्चेन्द्रियाः ४ चैव पदपूर्णे एतेत्रसा उदारा

सूत्र

काल मुक्कोसं अंतोमुहुत्तं जहन्नयं। विजढंमि सए काए वाऊ जीवाणं अंतरं १२५॥ एएसिं वन्नओ चेव गंधओ रस फासओ संठाणादेसओवावि विहाणाइं सहस्ससो १२६॥ ओराला तसाजेज चउविहा ते पकित्तिया। बेइंदिय तेइं

भाषा

अंतमुंहुर्त्त जघन्य पोतानीकाया मूंकेती वायुकायांना जीवने एतलो अंतर पडे १२४ एवाअ कायना वर्णथकी इत्यादि वर्ण १२५ उदारिक जे बेइंद्रीयादि त्रस जीव चिहुं प्रकारे कहिया बेंद्रीकाया जीव तेंद्रीकाया काया१ जीभ२ नासीका३ चउरिंद्रीकाया रसना घ्राणनाक४ पंचेंद्री १२६

स०टीका अ०३६ १०५८

ह्रस्व शरीरा १२७ (बेंदियायजे जीवा दुविहातेपकित्तिया पज्जत्तमपज्जत्तातेसि भेए सुणेहमे १२८) द्वीन्द्रिया कायरसनेन्द्रिय युक्ताजीवास्ते द्विविधा प्रकीर्त्तिता ते के द्वीन्द्रिया पर्याप्तापर्याप्ताश्च एव अमुनाप्रकारेण एतेद्वीन्द्रिया सन्ति इति वाक्य मे कथयतोयूयं शृणुत १२८ (किमिणो सोमङ्गलाचेव अलसामाइ वाहया वासोमुहाय सिप्पोय सखासखणगातहा १२९)' [पल्लोयाणुल्लया चेव तहेवय वराडगा जलुगा जालगाचेव चन्दणाय तहेवय १३०] क्रमयोऽपविच जीवा च पुन सोमङ्गलाद्वीन्द्रिय जीवविशेषा अलसाश्वर्षाकाले उत्पत्तिकोड्वा माद्ववाहकाक्षुद्रैरणिजाद इति लोक प्रसिद्धिमन्तोद्वीन्द्रिय जीवा वासोमुखावासी सद्दयवदनाजीवास्तथा शुक्तयोमुक्ताफलयोनय शङ्खा द्वविजलजा तथा शङ्खनकालघवोवर्णास उत्पत्तिकोड्वा १२९ पल्लुका च पुनरण पल्लकास्तथैव वराटका कपर्दका जलूकारुधिरपा जालका अपि द्वीन्द्रियजीवविशेषा तथैव चन्दना अक्षा येषा अक्षयवास्थापनाया स्थाप्यते

सूत्र

दिय चउरो पंचिंदिया चेव १२७॥ बेइ दियाओ जे जीवा दुविहा ते पकित्तिया। पज्जत्त मपज्जत्ता तेसि भेए सुणेह मे १२८॥ किमिणो सोमगला चेव अलसा माइवाहया। वासी मुहाय सप्पीया सखा सखणगा तहा १२९॥ पल्लो याणुल्लोया चेव तहेवय वराडगा। जलगा जालुगा चेव च दणाय तहेवय १३०॥ इइ बेंदिया एए णेगहा एवमा

भाषा

बेइद्रिय जे जीव बिह प्रकारे ते कह्या तीर्थंकरे एकपर्याप्ता बीजा अपर्याप्ता तेहना भेद सांभलि हे शिष्य१२७ कृमि१ सोमगल बेंद्रियजाति अलस्योया चूडेल वासधीना मुख सरिखा मुखते मोती सबधिया जीवते सर्प शख जीवशख नखबेंद्रिनाक्षाजीव १२८ पल्लूकजीव तथा वडागकोडीनाजीव जलोना जीव जालकजीव चदनगोषधा तेहना जीव १२९ इणे प्रकारे बेइ द्रिय जीव अनेक घणे प्रकारे लोकने एक देशे ते सर्वबेंद्री पर सबलोक मे नहो १३०

कि सत्वा दु ख उत्पतित उद्भूत आला तव वेदनायां दु खे वा रोगपरीषहे अध्यासित सहेत कीदृशो मुनि [redacted] स्पृष्टो रोगैर्व्याप्त दु खयतीति दु ख रोगस्तेन आर्त्त पीडित क्रियते इति दु खार्त्तित तादृशोपि प्रज्ञां स्थापयेत् रोगार्त्तस्य हि प्रज्ञा चञ्चलास्यात् साधुस्तु रोगसद्भावेपि प्रज्ञां स्थिरां एव विदधीत इत्यर्थ तदा रोगार्त्त किं कुर्यादित्याह तोगच्छ मिति साधुरोगार्त्तश्चिकित्सा रोगप्रतीकार न अभिनन्देत् न अनुमन्येत तदा चिकित्साया

भाषा

पुत्र हुओ ते धर्म साभलो दोक्षा लेइ मुद्गशैल नगरोइ पुहुतो तिहा नो राजा जितशत्रु राजानी बहिनीवी तेहनी स्त्रीआपणा भाइनी हरसनी व्याधि जाणी ते गमाडवा भणी आहार माहो औषध घालो ते आहार दोष करिय औषध मिश्रित जाणी आहार परिठव्यो काया अन्य मानी अणसण लेइ प्रतिमाइ रह्यो तिण काल वेस कुमरे गृहवास थके राति सियालनो शब्दसाभली अगनो लघु भीकनो सीयाल पकडी अणाव्यो तिणे कुमरे कौतुके हणी ते अकाम निर्जराइ मरीने व्य तर थयु तिणे अपणा वैरथकीकालवेस कुमरने सीयालनो वेस करिखावा लागो ते अहियासतो रोग परीसहसहतो सीधो जिम तिणे कालवेश साधे रोगपरीसहसह्योतिम बीजें साधु सहिवो ते भणीतृणानाफरसनो १७ मो परीसह वस्त्ररहित साधुने तथा अल्प वस्त्रने लू० लूपयतीने स० सयमवतने त० तपस्वीने त० तृणाने विपेइ स० सूतावेसताइ हु हुवे गा० शरीरने विपेइ पीडा ३४ आ० तडकाने नि० पडवे करी अ० अनुभराणा ह० हुवे वे० वेदना ए० एणो परे न० जाणिने न भोगवे त० ते वस्त्र ज० जे तृणानो त० पीडायकोजिन कल्पी साधु हुवे अथ तृण स्पर्श दृष्टांत सावत्थी नगरीइ । जितशत्रु राजानो पुत्र भद्र कुमार वैराग्य थको दीक्षा लेइ विहार कयो केतले अनार्य देशे पहुतो तिहा राजाना ओलगूए महात्मा अणदीठे अथ ओलखे पूछ्यु तु कुण पिण ते ऋषि भाषा अजाणतो बोल्यो नही तिहा हेरो करी भाल्यो वस्त्र उतालिया तहने डाभ सघाते बाधो मारो उपसर्ग कोधो ते सह्यो जिम भद्र कुमार तृणस्पर्श परीसह सह्यु तिम बीजे सहिवो इति कथा कि० स्नान अण कर वे मेल करी

मुहुत्त जहन्नयं बेंदियकायठिई त काय तु अमुञ्चओ १३४) द्वीन्द्रियजीवाना त स्वकीयकाय द्वीन्द्रियकाय अमुञ्चतां कायस्थितिरुत्कृष्टा ■ ख्येयकाल स्थितिर्जघन्यतोन्तर्मुहूर्त्तं स्थिति रस्ति इत्यर्थ १३४ अथ कालस्यांतरमाह [अणतकालमुक्कोस अन्तोमुहुत्त जहन्नय बेंदियजीवाण अंतरेयं वियाहिय १३५] द्वीन्द्रिय जीवाना स्वकीय योनित्यागे सति अपरस्मिन्काले उत्पद्यपुनर्द्वीन्द्रिय यो नौ एव उत्पद्यते तदा उत्कृष्ट अन्तर अनन्तकाल जघन्यतोन्तर्मुहूर्त्तं कालस्यान्तर भवति यदाहि द्वीन्द्रियो जीव स्वयोनेः पलायनस्ततो उत्पद्यते तदा अनन्तकाल तिष्ठति ततोऽनन्तकालस्यान्तर भवति पश्चात्पुनर्द्वीन्द्रियत्वे उत्पद्यते इत्यर्थं १३५ (एएसि वन्नओचेव गन्धओरसफासओ सठाणादेसओवावि विहाणाइ सहस्ससो १३६) एतेषां द्वीन्द्रियाणां वर्णतोगन्धतोरसत स्पर्शत सस्थानादेशतश्च सहस्र शोबहुनिविधानानि भेदा भवन्ति इति ज्ञेय १३६ अथ त्रीन्द्रियानाह [तेंदियाओ जेजीवा दुविहातेपकित्तिया पज्जत्तमपज्जत्ता तेसि भेएसुणेहमे१३७] येत्रीन्द्रियजीवा शरीररसनाघ्राणेन्द्रिय त्रययुक्तास्तेपर्याप्तापर्याप्तभेदेन द्विविधा प्रकीर्त्तिता तेषां त्रीन्द्रियजीवानां भेदान् मम कथयतो यूय शृणुत १३७ (कुन्थूपिवीलि उड्डंसा उक्कलुद्देहियातहा तणहारकट्ठहारा मालूगापत्तहारगा १३८)



अ तोमुहुत्त जहन्नय। बेंदिय जीवाणं अ तरेयं वियाहियं १३५॥ एएसि वन्नओ चेव गंधओ रस फासओ।
सठाणा देसओवावि विहाणाइ सहस्ससो १३६॥ तेंदियाओ जे जीवा दुविहा ते पकित्तिया। पज्जत्त मपज्जत्ता



जाइ तु १३४ एबेंद्रो जीवना वर्णथकी गधथकी रसथकी फरसथकी सस्थानथकी विधानभेद सहस्रगमे होइ १३५ तेंद्रीजीके जीव तेविह भेदे श्रीतिर्थं करे कह्या पर्याप्ता अपर्याप्ता तेतेंद्रो जीवना भेद साभल हे शिष्य १३६ कुंथुयाकीडो जाति उद्देसा जीवविशेष उक्कलिया उदेहि जीवतणहार काट्ठहा

द्वीन्द्रियाणां मध्ये कीचित् प्रसिद्धा· केचित् अप्रसिद्धाः सन्ति १३० [इइबेन्दियाएएणेगहाएवमाइओ लोएगदेसे ते सव्वे न सव्वत्थवियाहिया १३१] इति अमुनाप्रकारेण एतेद्वीन्द्रिया एव मादयोऽनेकधाः अनेकनामानोवर्त्तन्ते ते सर्वेद्वीन्द्रियाजीवालोकैकदेशे चतुर्दशरज्वात्मलोकस्य एकदेशे जला अयादौ तिष्टन्ति सर्वत्र नः व्याख्याताः सन्ति १३१ [सन्तइं पप्पणाईया अपज्जवसियाविय ठिइं पडुच्चसाईया सपज्जवसियाविय १३२] ते द्वीन्द्रियास्सन्ततिं प्राप्यप्रवाहमाश्रित्य अनादयः तथा अपर्यवसिता अपि सन्तिस्थितिं भव स्थितिं प्रतीत्यसादिकाः सपर्यवसिता अपि च सन्ति १३२ पूर्वं भवस्थितिं वदति (वासाइ बारसेवउ उक्कोसेणं वियाहिया बेन्दिय आउठिई अन्तोमुहुत्तं जहन्निया १३३) द्वीन्द्रियाणां द्वादशवर्षाणि आयु स्थितिरुत्कृष्टाव्याख्याताऽस्ति जघन्यतोन्तमुंहूर्त्तं न वसमयादारभ्य किञ्चिदूनं घटिकाद्वयं आयुर्पेस्थिति र्व्याख्याता १३३ अथ कायस्थिति माह ( संखिज्जकालमुक्कोसं अन्तो

सूत्र

इओ। लोएग देसे ते सव्वे न सव्वत्थ वियाहिया १३१ ॥ संतइंपप्प णाईया अपज्जव सियाविय ठिइं पडुच्च साईया सपज्जव सियाविय १३२॥ वासाइं वारसेवउ उक्कोसेण वियाहिया। वेइंदिय आउ ठिई अंतोमुहुत्तं जहन्निया १३३ संखेज्जकाल मुक्कोसा अंतोमुहुत्तं जहन्निया। वेइंदिय काय ठिई तं कायंतु अमुंचओ १३४ ॥ अणंतकाल मुक्कोसं

भाषा

संतति प्रवाहे आदि रहित अपर्यवसित अनतपीण थिति आश्री आदि सहित अने अनंत अंतवीण १३१ वरस बारे १२ उत्कृष्टी कही वेंन्द्रिय जीवने आउखानी स्थिति अंतर्मुहुर्त्त जघन्य आउखो १३२ संख्याता कालनी उत्कृष्टी अतर्मुहुर्त्त जघन्यपणे १३२ वेंद्री जीवनी कायस्थिति तेहनी ते माहे रहि ते वेंद्रियकाय अमूंकताने १३३ अनंतकाल उत्कृष्टो अंतर्मुहुर्त्त जघन्य वेंद्री जीवनी आतरोए कह्यो स्वकायछांडी वनस्पती माहि

सन्तति प्राप्य अनादयोऽपर्यवसिता स्थिति भवस्थिति कायस्थिति प्रतीत्यसादिका सपर्यवसिता अपि १४१ (एगूणपन्नहोरत्ता उक्कोसेणवियाहिया तेन्दियआउठिई अन्तोमुहुत्तं जहन्निया१४२) त्रीन्द्रियजीवानां एकोनपञ्चाशद्दिनानि उत्कृष्टा आयु स्थितिर्व्याख्याता जघन्यकायन्तर्मुहूर्त्तं आयुस्थिति रस्तीतिभाव १४२] अथ कायस्थिति माह [स खिज्जकालमुक्कोस अन्तोमुहुत्तं जहन्नयं तेन्दियकायठिई त काय तु अमुञ्चओ१४३] त्रीन्द्रियाणां स्वकाय त्रीन्द्रियकाय अमुञ्चतां मृत्वा तत्रैवोत्पद्यमानानां उत्कृष्टा सङ्ख्येयकाल स्थिति जघन्यतस्तु अन्तर्मुहूर्त्तं एव स्थितिरस्ति १४३ अथ कालान्तरमाह [अणतकालमुक्कोस अन्तोमुहुत्तं जहन्नयं इन्दियजीवाण अन्तर तु वियाहियं १४४] त्रीन्द्रियजीवानां स्वकायात् च्युत्वा अन्यत्रयो नो उत्पद्यते तदा तु उत्कृष्ट अनन्तकाल अन्तर भवति वनस्पति कायेऽनन्तकालस्य सम्भवात् जघन्य अन्तर्मुहूर्त्तं व्याख्यातं १४४ (एएसि वण्णओचेव गन्धओरस



साईया सपज्जवसियावियं १४१। एगुणपन्न होरत्ता उक्कोसेण वियाहिया। तेइ दिय आउ ठिई अ तोमुहुत्त जह न्निया १४२॥ सखेज्ज काल मुक्कोसा अ तोमुहुत्त जहन्निया। तेइ दिय काय ठिई त काय तु अमुचओ १४३॥ अणत काल मुक्कोस अ तोमुहुत्त जहन्नय। ते इ दिय जीवाण अ तरेयं वियाहियं १४४॥ एएसि वन्नओ चेव ग धओ रस



जीवनी आउखानी स्थिति अतर्मुहूर्त्त जघनेरा १४१ सख्यात काल उत्कृष्टी अतर्मुहूर्त्त जघनेरा तेंद्रीनीकाय स्थिति तेहनो ते माहि रहे ते द्रीकायना अमूकतु १४२ अनतकाल उत्कृष्टो अतर्मुहूर्त्त जघनेरा थेंद्रीय जीवनो आंतरो कह्यो एणे प्रकारे १४३ एतेंद्री जीवने वर्णथकी गधथकी रसथकी फरसथकी सस्थानना आदेशथकी विधानभेद सहस्रगमे हुइ १४४ चौरिंद्री जे जीव तिह भेदे कह्या तीर्थं करे पर्याप्ता अपर्याप्ता तेहनाभेद साभलि

(कप्पासट्ठमिञ्जाया तिन्दुगातओ समिञ्जगा सद्दावरीय गुम्मीय बोधव्वा इन्दगायगा १३९) [ इन्दगोवग माईया णेगहाएव माईओ लोएग देसे ते सव्वे न सव्वत्थ वियाहिया १४०] कन्थु पि पील्लु इंसा कन्थु लघुशरीर स्त्रीन्द्रिया जीव: पिपीलि: कीटिका: उद्दसास्त्रीन्द्रिय जाति विशेषा: उल्लालिकोजन्तु विशेषास्तथा उपदेहिका: तृणहार काष्टहारा एतेपि त्रीन्द्रिय जीवविशेषा: मालूका: पत्र हारका: एतेपित्रीन्द्रिय जीव विशेषा: १३८ कार्पासास्थिजाता स्तिंदुका: पुनस्तं तु समिञ्जका अपित्रीन्द्रियजीव विशेषा: सदावरी च पुनर्गुल्मी इति यूका: तथा इन्द्रकाय कायका इत्यपि कुतचिल्लोक प्रसिद्धा: १३९ इन्द्र गोपकादिका: इंद्र गोप काम मोला इति प्रसिद्ध: एवमादिका स्त्रींद्रिया अनेकधा जीवास्ते सर्वे लोकैक देशे व्याख्याता सर्वत्र न व्याख्याता: १४० [ सन्तइ पप्पणाईया अपज्जव सियाविय ठिइं पडुच्च साईया सपज्जव सियाविय १४१ ] एते त्रींन्द्रिय जीवा:

सूत्र

तेसिं भेए सुणेह मे २३७। कुंथू पिपीलि उदंसा उक्कलुद्देहिया तहा। तणहार कट्ठहाराय मालुगा पत्तहारगा१३८। कप्पासट्ठिमिंजाय तिंदुगाओ समिंजगा। सयावरीय गुम्मीय बोधव्वा इंदगाईया १६९। इंदगोवग माईया णेगहा एव माइओ लोएग देसे ते सव्वे न सव्वत्थ वियाहिया १४०। संतइं पप्प णाईया अपज्जवसियाविय। ठिइं पडुच्च

भाषा

रादि जे जीव जाणे मालूका पत्रहार १३७ कपासना जीव अठमिंजी जीव तिंदुक जीवतो समिं जगजीव सदावरी जीवघूकाश तपदी जीव जाणि वाइंदकाइय जीव १३८ इंद्रगोयमामोला प्रमुख अनेकप्रकारे तेंद्री जीव लोकने एकदेशे ते सर्व सगले लोके कह्या नथी १३९ संतति प्रवाहे अनादि अने अपर्यवसित छेहडो भवथिति कायथिति आश्री आदिछे अने सपर्यवसित सांत पोण नौर्ये १४० ओगणपंचास दिवस उत्कृष्टी स्थिति कही तेंद्री

यावद् लोगहाएवमाइश्रो लोगस्स एगदेसम्मि ते सव्वे परिकित्तिया १५०) इति अमुना प्रकारेण एतेचतुरिंद्रियाएवमादिका अनेकधा सन्ति ते सर्वे चतुरिंद्रियालोकस्य चतुर्दशरज्ज्वात्मलोकस्यैकदेशेपरिकीर्त्तिता १५० [सन्तइं पप्पणाइया अपज्जवसियावियं ठिइं पडुच्चसाइया सपज्जवसियावियं १५१] सन्तति प्राप्यते जीवा अनादय स्तथा अपर्यंवसितास्तथापि भवस्थिति कायस्थिति प्रतीत्यसादय सपर्यवसिता अपिसन्ति १५१ [छच्चेवय मासाऊ उक्कोसेण वियाहिया चउरिन्दिय आउठिइ अन्तोमुहुत्त जहन्निया १५२] चउरिन्द्रियाणा उत्कृष्टा षण्मासा आयु स्थिति र्व्याख्याता जघन्यिकाऽन्तर्मुहूर्त्तं स्थिति र्व्याख्याता १५२ भवस्थिति उक्त्वाकायस्थिति माह [संखेज्जकालमुक्कोस अन्तोमुहुत्त जहन्निया चउरिंदियकायठिइं तं कायं तु अमुंचओ १५३] चतुरिन्द्रियाणा स्व कायं अमुंचता पुन पुनस्तत्रैवोत्पद्यमानाना संख्येयकाल उत्कृष्टास्थिति रस्ति जघन्यिका च अन्तर्मुहूर्त्त



मोहए चत्ति रोडए विचित्ते चित्तपत्तए। उहि जलिया जलकारिय नीयाततव गाइया १४९॥ इइ चउरिंदिया एए णेगहा एव माइओ, लोगस्स एग देसम्मि ते सव्वे परिकित्तिया १५०॥ सतइपप्प णाइया अपज्जव सियाविय। ठिइं पडुच्च साइया सपज्जवसियाविय १५१॥ छच्चेवय मासाउ उक्कोसेण वियाहिया। चउरिंदिय आउ ठिइ अंतोमुहुत्त



जीव मोहिजलियाजीव जलकारीजीवनीयाजीव आपवा तवगजीव एलीकहदि १४८ इणे प्रकारे चौरिंद्रीजीव अनेकघणे प्रकारे एवमादिक लोक चौद राजना एकदेशनै भागे ते सघला कह्या तीर्थंकरे १४९ सतति प्रवाहे अनादि अपर्यवसित अनतपणि थिति आश्री आदि सहित अने अतसय १५० छमासनो उत्कृष्टो थित कह्यो तीर्थकर देवे चउरिंद्री जीवनो आउखानीथित अतर्मुहूर्त्त जघन्यनौ आवखो १५१ संख्याता कालनो उत्कृष्टो

फासओ सण्ठाणादेसओवावि विहाणाइ सहस्ससो १४५) एतेषां तीन्द्रियजीवानां वर्णतोगन्धतोरसतः स्पर्शतश्च संस्थानादेशतश्चापि सहस्रशोविधानानि भवन्ति१४५ अथ चतुरिंद्रियानाह (चउरिन्दियायजेजीवा दुविहातेपकित्तियापज्जत्तमपज्जत्ता तेसिं भेएसुणेहमे १४६) च उरिन्द्रियायेजीवाः स्पर्शनरसनघ्राणचक्षुसहितास्ते च पर्याप्तापर्याप्तभेदेनद्विधाः प्रकीर्त्तिता· तेषां भेदाः मेकथयतोयूयं शृणुत १४६ (अन्धियापोत्तियाचेव मच्छियामसगातहा भमरे कीडपयङ्गे यढिंकणेकुङ्कणेतहा १४७) (कुकुडेसिङ्गरीडीय नन्दावत्तेयविच्छिए डोलेयभिङ्गरीडीय विरलो अच्छिवेहए १४८) [अच्छिलेमाहए अत्थि रोडएचित्तपत्तए उहिं जलियाजलकारीय नीययातंबगाइया१४९] तिसृभिर्गाथाभिश्चतुरिन्द्रियजीवानांनामानिआह अन्धिकाच पुनः पौत्तिका अच्चिका तथामशका भ्रमरस्तथाकीटः पतङ्गश्च तथाढिंकणस्तथा कुङ्कुण· एते चतुरिंद्रियाजंतव १४७ पुनः कुकुटः शृङ्गरीटीनन्द्यावर्त्तवृश्चिकडोलो शृङ्गरीटकविरली अचवेधकः १४८ अच्चिल· मागधः अच:रोडक· चित्रपत्रकपधि जलका जलकारी नीचकाताम्रका १४९ एतानि देशीयनामानि [इइचउरिन्दि



फासओ। संठाणा देसओवावि विहाणाइं सहस्ससो १४५॥ चउरिंदियाओ जे जीवा दुविहा ते पकित्तिया। पज्जत्तमपज्जत्ता तेसिं भेए सुणेह मे १४६॥ अंधिया पुत्तिया चेव मच्छिया मसगा तहा। भमरे कीड पयंगेय ढिंकणे कंकणे तहा १४७॥ कुक्कुडे सिंगिरीडीय णंदावत्तेय विच्छिए। डोल्ले भिंगारीय विराली अच्छिवेहए १४८॥ अत्थिले



हे शिष्य १४५ अंधियाजीव तथा प्रकारे पोतीयाजीव माखी मसाजीव तिम भमरा कीडीजाति पतगीया ढंकण जीवकुंकुणजीव तिम१४६ कुक्कुडजीव सिंगरीडीजीव नंद्यावर्त्तनामवीछुजीव डोल भिंगरीडीजीव विरलीजीव अचवेधक १४७ अच्छिलजीव मागधजीव अचीरोमजीव विचितजीव चित्रपत्र

व्याख्याता १५६ (नेरइया सत्तविहा पुढवीसुसत्तसूभवे पज्जत्तमपज्जत्ता तेसिभे एसुणेइमे१५७) सप्तसुरत्नप्रभादिषु नरकपृथ्वीषु सप्तधास्तेनैरयिकाभवेयु स्तेपुननैरयिका पर्याप्ता अपर्याप्ताश्च सन्ति सप्तनैरयिका पर्याप्ता सप्तनैरयिका अपर्याप्ता एव चतुर्दश प्रकारास्तेषां भेदान् मे मम कथयत सतो यूय शृणुत १५७ पूर्वं सप्तनरकपृथ्वीना स्वरूपमाह (रयणाभा १ सक्कराभा २ वालुयाभा ३ य आहिया पङ्काभा ४ धूमाभा ५ तमा ६ तमतमा तहा १५८) रत्नाना वैडूर्यादीनां आभाइव आभायस्या सारत्नाभा १ रत्नकाण्डस्य भवन पति भवनस्याभाइव आभायस्या सारत्नाभा १ शर्करा श्लक्ष्णपाषाण रूपा तदाकारा आभायस्या सा शर्कराभा २ वालुकास्त्वरज सदृश आभायस्या सावालुकाभा ३ पङ्कस्य आभाइव आभायस्या सापि ङ्काभा ४ धूमस्य आभाइव आभायस्या साधूमाभा ६ यद्यपि तत्र धूमस्य अभावोस्ति तथापि तत्र तदाकार पुद्गलाना परिणामोस्ति इति धूमा ५ तम प्रभातमोरूपान्धकारमयो ६ तमस्तमाप्रकृष्ट तमस्तमसामयी अत्यन्तान्धकारमयीइत्यर्थ ७ सप्तविध नरक पृथ्वीत्वेन तदन्तर्वर्त्तिनोपि नरकजीवा सप्तधाव्याख्याता ते पुन पर्याप्तापर्याप्तभेदाच्चतुर्दशधाज्ञेया १५८ इति सप्तनरकपृथ्वीना स्वरूपमुक्त्वा अथनामान्याह ( घम्मा १ वसगासेलातहा अञ्जण



रयणाभसक्कराभावालुयाभायआहिया। पङ्काभा धूमाभातमा तमतमा तहा १५८॥घम्मावसगासेलातहा अजणरिट्ठ
गामघामाघवइचे वणारयायपुणोपुणो। रयणाइगुत्तयोचे वतहाघम्माइणामयो इइ नेरइया एएसत्तहापरिकित्तिया



रत्ननी आभाकांतिते रतनप्रभा सर्करा कांकरा सरिषी क्रांति ते सर्कराप्रभा वेलूनी आभाकांति ते सरिखीते वालूकाप्रभा कही१५६ पककादय सरिखो क्रांति ते पंकप्रभा कहीइ धूम्रनी सरीखी कांतते धूम्रप्रभातम अंधकार रूपतेतमा तमतमा अत्य त अंधकारइंण प्रकारे नारकी सातेप्रकारि कही १५७

दुचाए जहन्नेण एग तु सागरोवम १६४] द्वितीयाया नरक पृथिव्या शर्कराभाया अन्त्यमे प्रस्तटे नारकाणा उत्कृष्टत्वेन त्रीणि सागरोपमान्यायु स्थितिर्व्याख्याता जघन्येन तु एक सागरोपम आयु स्थितिर्व्याख्याता १६४ (सत्तेव सागराऊ उक्कोसेण वियाहिया तइयाए जहन्नेण तिन्नेव सागरोवमा १६५) तृतीयाया नरक पृथिव्या वालुक प्रभाया अन्त्यमे प्रस्तटे उत्कृष्टत सप्तसागरोपमानयायु स्थितिर्व्याख्याता जघनात स्त्रीणि सागरोपमाणि स्थिति र्व्याख्याता १६५ [दससागरोवमाऊ उक्कोसेण वियाहिया च उत्थीए जहन्नेण सत्तेव सागरोवमा १६६] चतुर्थ्या नरक पृथिव्या पङ्कप्रभायां अन्त्ये प्रस्तटे उत्कृष्टेन दशसागरोपमानि स्थिति व्याख्याता जघनेन तु सप्तसागरोपमानि आयु स्थिति

मूल

न्नेण दस वास सहस्सिया १६१। तिन्नेव सागराऊ उक्कोसेण वियाहिया। दुचाए जहन्नेण एग तु सागरोवम १६२ सत्तेव सागराऊ उक्कोसेण वियाहिया। तइयाए जहन्नेण तिन्नेवऊ सागरोवमा १६३॥ दस सागरोवमाऊ उक्कोसेण वियाहिया। चउत्थीए जहन्नेण सत्तेवऊ सागरोवमा ६४॥ सत्तरस सागराऊ उक्कोसेण वियाहिया। पचमाए

भाषा

छटो कह्यो तीर्थ करे कह्यो पहेलो रतनप्रभा पृथवीने जघनत दशहजार वर्ष पहेला प्रतरनी अपेक्षा १६० तीन सागरोपमनो आउखु उत्कृष्टो कह्यो तिर्थ करे बीजो पृथवीइ नारकीने छेहले प्रतरे एक सागरोपम पहेला प्रतरनी अपेक्षाइ १६० सात सागरोपनो आउखो उत्कृष्टो कह्यो उत्कृष्टो भगवंते कह्यो त्रीजो पृथवी नारकीनो छेहलो प्रतरे जघन्य तीन सागरोपमनो अपेक्षा पहिला प्रतरे १६१ दशसागरोपमनो आउखो उत्कृष्टो कह्यो चोथो पृथवी नारकीनो छेहले प्रतरे सात सागरोप मनो इहइ पहेला प्रतरनी अपेक्षा १६२ सतर सागरोप मनो आउखो उत्कृष्टो कह्यो तीर्थ करे

रिट्ठगा मघासाघवईचेव णारयाय पुणोपुणो १५८) घर्मा प्रथमा पृथ्वी द्वितीयावंशका तृतीयाशैला तथा चतुर्थी अञ्जना अरिष्टापञ्चमी मघापष्टी माघवती सप्तमी अत्रवासिनोनारका: सप्तधाभवेयु: १५८ (रयणाइ गुत्तओचेव तहा घम्माइणामओ इइनेरइयाएए सत्तहापरिकित्तिया १६०) रत्न प्रभादयो गोत्रतोज्ञेया· तथा घर्मादयोनामतोज्ञेया: इति अमुनाप्रकारेण एतेनैरयिका: सप्तधा: परिकोर्त्तिता· १६० अथ चेत्र विभागं आह (लोगस्सएगदेसम्मि ते सव्वे उवियाहिया इत्तोकालविभागं तु तेसिं वुच्छं च उविहं १६१]ते सर्वेनारकालोकस्यैकदेशेव्याख्याता· अन्यत्र सर्वत्र न सन्ती त्यर्थ: इत्तोइतोऽनन्तर तेषां नारकाणां चतुर्विधं कालविभागं वक्ष्ये १६१ (सन्तइं पप्पणाइया अपज्जव सियाविय ठिइं पडुच्चसाईया सपज्जवसिया विय१६२] सन्तति प्राप्य प्रवाह माश्रित्यतेनारका अनादयो अपर्यवसितायापि स्थितिं भवस्थितिं कायस्थिति: आश्रित्यसादय: सपर्यवसितायापि वर्त्तन्ते १६२ [सागरोवममेगन्तु उक्कोसेणवियाहिया पढमाएजहन्नेणं दसवाससहस्सिया १६२] प्रथमायां नरक पृथिव्यां रत्नप्रभायां उत्कृष्टेन त्रयोदशे प्रस्तटे एकंसागरोपमं आयु: स्थितिर्व्याख्याता: जघन्येन दशवर्ष सहस्रिका आयु: स्थिति र्व्याख्याता: १६२ [तिन्नेवसागराउ उक्कोसेण वियाहिया

सूत्र

लोगस्स एगदेसंमि तेसव्वे उ वियाहिया। इत्तो कालविभागं तुतेसिं वोच्छं चउव्विहं। १५८ संतइं पप्पणाईया अप
ज्जव सियाविय ठिइं पडुच्च साईया सपज्जवसियाविय। १६० सागरोवम मेगं तु उक्कोसेण वियाहिया। पढमाए जह

भाषा

लोकना एकदेश अधोलोकने विषे ए सर्वनारकी कह्यो एतला कहा पछी कालनो विभाग तेहनो चिहुं प्रकारे कहुं १५८ संतति प्रवाहे अनादि अने अपर्यवसित छेहडो पीण स्थिति आश्री आदि सहित अने पर्यवसित अंतपणिदे १५८ सागरोपम १ तेरमो पातरनो अपेक्षाइं उत्

उ०टीका
अ०२
१०८

कारण कारणञ्च दूरतएव त्यक्तं 'यदा मनस्यपि चिकित्साचिन्तन साधुर्नकुर्यात् कीदृशः साधुरात्मगवेषकः आत्मानं सयमजीवं गवेषयतीति आत्म
गवेषकः एतादृशः सन् सचित्त्वे समाधिना तिष्ठेत् पीडया पीडितो न क्रन्देत् इत्यर्थः खुयस्मात् कारणात् श्रामण्यं साधुत्वं एय एतदेव जंइति यस्मात्
रोगे समुत्पन्ने स्वय चिकित्सां न कुर्यात् अन्येनापि न कारयेत् जिनकल्पिकापेक्षयायमाचारः स्थविरकल्पिकाः पुनः कारयंत्यपि इति वृद्धसंप्रदायः।
अत्र काल वैश्यिककथा २२ मथुरायां जितशत्रुनृपोऽतिसुरूपां कालाख्यां वेश्यां अन्तःपुरेऽचिपत् तस्या पुत्रः कालवैश्यकस्तस्य भजनी मुद्गशैलनगरस्वामिना
परिणीता अन्यदा'स कुमारः शृगालशब्दं श्रुत्वा स्वभृत्यान् अपृच्छत् कस्यायं स्वरः ते रूचे फेरुकास्वरोयं कुमारेणोक्तं फेरुकोऽत्रानीयतां तैरानीतः
शृगालः कुमारेण हन्यमान खीखीति कुर्व्वाणो मृतः अकामनिर्जरयाव्यन्तरो जातः अन्यदा कुमारः स्थविरान्तिके प्रव्रजितः गीतार्थो जातः एकाकी
विहरन् प्रतिमां प्रतिपन्न तत्सरिरेरोगो बभूव न चिकित्सां कारयति नाप्यौषधं करोति तथाविधप्रत्याख्यानात् अन्यदा विहरन्नऽसौ मुद्गशैलपुरे गतः
तत्र तन्नगरस्वामिपरीणीतया तद्भगिन्यार्शोघ्नौषधमिश्रा भिक्षा दत्ता तेन चाजानतार्शोघ्नौषधमिश्र आहारो गृहीतः औषध प्रयोगे च ज्ञाते अन्नं मे
प्रत्याख्यान मित्यऽधिकरणदोषशंकया भक्तं प्रत्याख्यानं पुराहहि तत्र च तेन शृगालजीविन व्यन्तरीभूतेनो पयोगदानेनासौ उपलचित' समुत्पन्न वैरेण
च नवप्रसूतशिवारूपेण खीखीकुर्वंता खाद्यमानः शिवोपसर्गमर्शोरोगं च सोढवान् एव मऽन्यै रपि रोगः सोढव्यः अथ रोगादि युक्तस्य शयनादौ दुःसह
तृणस्पर्श स्यात् अत स्तत्परीषहमाह अचेलगस्स लूहस्स सञ्जयस्सतवस्सिणो तणेसु सुयमाणस्स हुज्जा गायविराहणा २४ आयवस्स निवाएणं अउला
हवद् वेयणा एवं नच्चा नसेवंति तंतुजं तणतज्जिया २५ तपस्विनः संयतस्य तृणेषु शयमा नस्य तृणैर्गात्रविराधना भवेत् कीदृशस्य सयतस्य अचेल
कस्य वस्त्ररहितस्य पुनः कीदृशस्य रूक्षस्य तैलाभ्यंगादिरहितस्य यदा शरीरे तृणैः क्षत्वा पीडास्यात्त दाकिं कुर्यादि त्याह आयवस्से ति तृणतर्जिता

कथिता १६६ [सत्तरस सागराऊ उक्षोसेण वियाहिया पञ्चमाए जहन्नेणं दसचेवउसागरोवमा१६७] पञ्चमायां नरक पृथव्यां धूम प्रभायां अन्त्ये प्रस्तटे सप्तदशसागरोपमानगयु: स्थितिर्व्याख्याता: जघनेन तु दशसागरोपमानगयु: स्थितिर्व्याख्याता १६७ (वावीस सागराऊ उक्षोसेण वियाहिया छट्ठीए जहन्नेणं सत्तरससागरोवमा १६८) पष्ठ्यां नरकपृथिव्यां तम: प्रभायां अन्त्येप्रस्तटे उत्कृष्टेन द्वाविंशति सागरोपमानि आयु: स्थितिर्व्याख्याता जघनेन सप्तदशसागरोपमानि आयु: स्थितिर्व्याख्याता: १६८ (तित्तीस सागराऊ उक्षोसेण वियाहिया सत्तमाए जहन्नेणं वावीसं सागरोवमा १६९) सप्तमायां नरक पृथिव्यां तमस्तम: प्रभायां अन्त्ये प्रस्तटे उत्कृष्टेन त्रयस्त्रिंशत् सागरोपमानगयु: स्थिति व्याख्याता जघनेन द्वाविंशति सागरोपमानगयु: स्थितिर्व्याख्याता१६९ [जाचेवउ आउठिई नेरईयाणं वियाहिया साते सिकायठिई जहन्नुक्कोसियाभवे१६९] नारकाणां याजघनोत्कृष्टत: आयु:

**सूत्र**

जहन्नेणं दसचेवउ सागरोवमा १६५॥ वावीस सागराऊ उक्कोसेण वियाहिया। छट्ठीए जहन्नेणं सत्तरस सागरोवमा १६६॥ तित्तीस सागराऊ उक्कोसेण वियाहिया। सत्तमाए जहन्नेणं वावीसं सागरोवमा १६७॥ जाचेवउ

**भाषा**

पांचमी पृथवी नारकीनी छेहली प्रतरे जघन्य दस सागरोपमनी पेहला प्रतरनी अपेक्षाइं १६३ जे वली आउखानी स्थिति उत्कृष्टी कह्यी तीर्थंकरे नारकीने विषे छट्ठीइं पृथिवीइ नारकीनी छेहले प्रतरे जघन्ये साई तेहनी तेहन्ये जकाय स्थिती जे भणी नारकी मरी नारकीसे नथाइं जघन्य पणे उत्कृष्ट पणे हुई १६४ बावीस सागरोप मनो आउखो उत्कृष्टो कह्यो तीर्थंकरे छट्ठीइं पृथिवीइं नारकीनो छेहले प्रतरे जघन्य सतर सागरोप मनो पेहली प्रतरनी अपेक्षा १६५ तेत्रीस सागरोप मनो आउखो उत्कृष्टो कह्यो तीर्थंकरे सातमी पृथिवीइ नारकीनो जघन्ये बावीस साग

स्थितिर्व्याख्याता सा एव तेषां नारकाणां कायस्थितिर्जघन्यतोत्कृष्टतश्च व्याख्याता यतोहि नारको जीवोमृत्वा पुनर्नरकभूमौ नोत्पद्यते अनन्तर गर्भज पर्याप्तसंख्येय वर्षायुष्केषु उत्पद्यते पर्याप्तके उत्पद्यते नोत्पद्यते च १७० अथ कालान्तरमाह (अणन्तकालमुक्कोस अन्तोमुहुत्त जहन्निय विजढ मिस एकाएनेरइयाण तु अन्तर १७१) नारकाणां तु स्वेकायेत्वक्ते सति उत्कृष्ट कालस्यान्तर अनन्तकाल भवति जघन्यतोऽन्तर्मुहूर्त कालान्तर भवति यदा अनन्तरनरकात् कश्चिन्नारकश्च्युत्वा गर्भजपर्याप्तमत्स्यादिषु उत्पद्यते तत्र च अत्यन्तदुष्टाध्यवसायत्वात् अन्तर्मुहूर्त आयु प्रपाल्यमृत्वाऽनन्तरनरके उत्पद्यते १७१ [एएसि वन्नओचेव गन्धओ रसफासओ सठाणा देसओवावि विहाणाइ सहस्ससो १७१] एतेषां नारकाणां वर्णतो गन्धतोरसत स्पर्शत संस्थानादेशतयापि सहस्रसोविधानानि बहवो भेदा भवन्ति १७१ अथ पञ्चेंद्रियतिरश्चां भेदानाह [पञ्चेन्दियातिरिक्खाय दुविहाते वियाहिया समुच्छिमातिरिक्खाय गब्भवक्क तियातहा १७२] पञ्चेद्रियास्तिर्यञ्चो द्विविधा व्याख्यातास्तेके सम्मूर्छिमास्तिर्यञ्च च तथा गर्भव्युत्क्रान्ति कास्तिर्यञ्चश्च

मूल

आउ ठिई नेरईयाण वियाहिया। सातेसि काय ठिई जहन्नुक्कोसिया भवे १६८॥ अणत काल मुक्कोस अतोमुहुत्त जहन्नय। विजढमि सए काए नेरइयाणतु अतर १६९॥ एएसि वन्नओ चेव गधओ रस फासओ। सठाणा देसओ वावि विहाणाइ सहस्ससो १७०॥ पचिदिय तिरिक्खाओ दुविहा ते वियाहिया। समुच्छिम तिरिक्खाओ गब्भ वक्क

भाषा

तीय मनो १६६ अनतोकाल उत्कृष्टो अतरमुहूर्त जघन्य छांडे थके आपणो नारकीनो काया नारकीनो आंतरो हुओ १६७ ए नारकी वर्ण थकी वली गधथकी रसथकी फरसथकी सस्थानना आदेशथकी विधान भेद सहस्स गमे हुइ १६८ पचेंद्रिय तिर्यंच जीव निश्चे दिहु भेदे कह्या तीर्थ

तत्र संमूर्छा अतिशय मूढ भावस्तेन निर्वृत्ता· नि पन्ना: समूर्छिमा: संमूर्छिमायते तिर्यञ्चश्च समूर्छिम तिर्यञ्चो मन· पर्याप्ति रहिता: सदा संमूर्छिताइव· तिष्टन्ति गर्भ व्युत्क्रान्तिका गर्भजामन· पर्याप्ति सहिता: १७२ [दुविहा ते भवे तिविहा जलयरा थलयरा तहा खहयराय बोधव्वा तेसिम्भेये सुणेहमे १७३ ] ते द्विविधा संमूर्छिमा गर्भजाश्च तिर्यञ्च· पुन स्त्रिविधा: बोधव्या· तत् त्रैविध्यं यथा जलचरा· स्थलचरा· तथा खचरा सन्ति एतेत्रयोपि द्विविधा: गर्भजा: समूर्छिमाश्चज्ञेयास्तेषां भेदान् मे मम कथयतो यूयं शृणुत १७३ अथ जलचर भेदानाह (मच्छायकाच्छभा यागाहायमगरातहा सुंसुमारायबोधव्वा पञ्चहाजलयराहिया १७४ ) एते जलचरा: पञ्चधा आख्याता: एतेके मत्स्यामीना: काच्छपा: कूर्माश्चापि ग्राहास्तं तुकजीवा मकरामहामत्स्या: शिशुमारापि मत्स्यविशेषा: एतेषु पञ्चसु भेदेषु बहूनां भेदानां अन्तर्भाव: यतोहि यावन्त: स्थलजीवास्तावन्त एव जलजीवा: इत्युक्तं· १७४ [लोएगदेसेते सव्वे न सव्वत्थवियाहिया एत्तोवालविभागन्तु तेसिं वुच्छच उव्विहं १७५] ते सर्वे जलचर जीवा: लोकैकदेशे

सूत्र

तिया तहा १७१ ॥ दुविहा ते भवे तिविहा जलयरा थलयरा तहा । खहयराय बोधव्वा तेसिं भेए सुणेह मे १७२ ॥
मच्छाय कच्छभाया गाहाय मगरा तहा। सुं सुमाराय बोधव्वा पंचहा जलयरा हिया १७३ ॥ लोएगदेसे ते सव्वे

भाषा

करे एक समूर्च्छिम विजोगर्भज तिर्यंच मन सहित १६९ विभेदे कह्या ते वली त्रिहुं प्रकारे हुई जलमाहिंचाले मच्छादि तेजलचर भूमि चाले हयभा दिते थलचर तथा वलि खचर जाणवो खचर आकाशेचालेते हंसादिते जलचरादि जीवनाभेद सांभली शिष्य मुझने कहताप्रते१७० माछलानी जातका छवानी जांति ग्राहकतांतूया जीव तथा मगर मच्छ माछलानी जाति सुसमार जल चीरजीव जाणवा पांचेप्रकारे जलचर जीव जाणवा १७१ लोक

पारापत प्रचिप्त: एकस्मिन्पार्श्वे स्वदेहा दुत्कीर्णमांसारोपोविहित. राजा यथा २ तत्र मांसं प्रचिपति तथा २ अन्यत्रपार्श्वे पारापतो गुरुतरो देवमा यमा भवति राजा पुनः २ स्वदेहमांस मनग्रलचिपति तं दृष्ट्वा राजलोक. समस्तो हाहारवं चकार पारापतपार्श्वे गुरुभारमवेच्य स्वमांसपार्श्वे राजा स्वयमारूढः एतादृशं वज्रायुधस्य सत्वं दृष्ट्वा विस्मितोदेव. स्वंरूपं प्रकटीकृत्य प्रकामं स्तुत्वा च स्वस्थानंगतवान् अनग्रदा वज्रायुध सहस्रायुधौ पितृपुत्रौ चेमङ्करगणधर समीपे जात वैराग्यौ सहस्रायुध सुत बलिराज्ये भिषिच्य प्रव्रजितौ प्रव्रज्या पर्यायश्च परिपालग्रपादपोपगमन विधिना कालं कृत्वा द्वावपि जनौ परितनग्रैवेयके एकत्रिंशत्सागरोपमस्थितकौ अह देवौ जातौ अहमिन्द्रसौख्य मनुभूय ततश्च्युतौ इहैव जम्बूद्वीपे पूर्वविदेहे पुष्कलावती विजये पुण्ड रीकिण्यां नगर्यां घनरथोराजा तस्यद्वे महादेव्यौ पद्मावती मनोरमती च तयोगर्भे जातौ वज्रायुधौ मेघरथ सहस्रायुधौ दृढरथश्चेति द्विजिन्नतौ ततो कृत ताभ्यां कलाग्रहणं तौ द्वौराज्ये स्थापयित्वा वनरथ स्वयं दीचां गृहीत्वा केवल ज्ञानमुत्पाद्य तीर्थंकरोजातः तयोर्मेघरथ दृढरथयोः पूर्व भवभ्यासतो जिन धर्मदचताऽभूत् अधिगत जीवाजीवादिभावौ तौ सुश्रावकौ जातौ अनग्रदापितुस्तीर्थं करस्य समीपे द्वावपि जनौनिजपुत्रं राज्ये भिषिच्य प्रव्रजितौ तत्राधीत सूत्रार्थेन मेघरथेन विंशति स्थानकैः समर्जितं तीर्थङ्करनाम गोत्रं दृढरथेन शुद्धं चारित्रं आराधितं द्वावपि संलेखनाविधिना कालं कृत्वाऽनु त्तरोपपातिकेषु देवेषु उत्पन्नौ तत्र सर्वार्थसिद्ध विमानेऽनर्गलं सुखमनुभूय मेघरथ कुमारस्ततश्च्युत्वा इहैव जम्बूद्वीपे भरतेचेत्रे हस्तिनागपुरे विश्वसेनस्य राज्ञोऽचिरादेव्या. कुचौ भाद्रपद कृष्णसप्तमी चतुर्दश स्वप्नसूचित पुत्रत्वेनोत्पन्न पुनर्ज्येष्ठ कृष्णत्रयोदशीदिनेजन्मसंजात चतुषष्टि सुरेन्द्रैरपि जन्माभिषेकः कृतः उचितसमये गर्भस्थेवास्मिन् भगवति सर्वदेशेषु शान्तिर्जातेति शान्तिरितिनामकृतं मातपितृभ्यां क्रमेणासौ सर्वकलाकुशलोजातः यौवनं प्राप्तः विवाहितः प्रवरराजकन्याः क्रमेण राज्ये स्थापितः पिताचारित्रं गृहीतं शान्तिश्चक्रवर्त्ति पदवीसमायाता उत्पन्नानि चतुर्दशरत्नानि साधितं भरतं षट्खण्ड

समये च निंक्राम्य षोडशवर्षाणि चोग्रविहारेण विहृत्य केवल ज्ञान भाग् जात देवाश्च समवसरणमकार्षुः प्रव्राजिता केवल पर्यायेणघनकालं विहृत्य
संमेतगिरि शिखरेमोक्षमगमत् तस्य भगवतः कुमारत्वे त्रयोविंशति वर्ष सहस्राणि माण्डलिकत्वे च त्रयोविंशति वर्ष सहस्राणि चक्रित्वे त्रयो विंशति
वर्षसहस्राणि श्रामण्ये च त्रयोविंशति वर्षसहस्राणि साद्धानि च सप्तशतानिवर्षाणि अभवन् सर्व्वायुर्हि नवति वर्षसहस्राणि सार्द्ध सप्तशतानि चास्य
बभूव इति श्रीकुन्थुनाथ दृष्टान्त सागरन्तं च इत्ताण भरहं नरवरी सरो अरोय अरयं पत्तो पत्तोगइमणुत्तरं ४० च पुनः अरो अरनामानरवरेश्वरः
सप्तमचक्रीसागरान्तं समुद्रान्तं भरतक्षेत्रं षट् षण्डराज्यन्त्यक्त्वा अरजस्त्वं प्राप्तः सन् अनुत्तरागतिं सिद्धिगति प्राप्तः मोक्षं गत इत्यर्थः चक्री भूत्वातीर्थं
करपदं भुक्त्वा मोक्षं गतइत्यर्थः अत्र अरनाथ दृष्टांत अरनाथस्त्तराध्ययन वृत्तिर्द्दयोपि नास्ति तथापि ग्रंथांतराल्लिख्यते प्राग् विदेह विभूषणे मङ्गला
वतीविजयेरत्न सञ्चया पुरी अस्ति तत्र महीपालनामा भूपालोस्ति प्राज्यं राज्यं भुंक्ते अन्यदा गुरुमुखाद्धर्मं श्रुत्वा स वैराग्य मागतः स तृणमिव
राज्यन्त्यक्त्वादीक्षां लली गुर्वंतिके एकादशाङ्गानि अधीत्यगीतार्थो बभूव बहुवत्सरकोटीः स संयममाराध्य विशुद्ध विंशति स्थानकै अर्हन्नामकर्म
बबंध ततो मृत्वा सर्वार्थसिद्धविमाने देवो बभूव ततश्च्युत्वा इह भरतक्षेत्रे हस्ति नागपुरेसुदर्शननामा नृपो बभूव तस्य राज्ञी देवीनाम्नी बभूव
तस्याः कुक्षौ सोऽवततार तदानीं रेवती नक्षत्रं बभूव तया चतुर्द्दश स्वप्नादृष्टा तत पूर्णेषु मासेषु रेवती नक्षत्रे तस्य जन्म बभूव
जन्मोत्सवस्तदाषट् पञ्चाशत् दिक् कुमारिकाभि चतुः षष्टिसुरेन्द्रैर्निर्मितः तत सुदर्शन राजापि स्व पुत्रस्य जन्मोत्सवं विशेषाच्चकार अस्मिन्
गर्भगते माता प्रौढारत्न मयोऽरस्वप्ने दृष्टः ततोपितास्याऽरइति नाम कृतं देव परिवृतः स वयसा गुणैश्चवर्द्धते स्म एकविंशति सह
स्रवर्षेषु अरकुमारस्य पिता राज्यं दत्तं एकविंशति वर्षसहस्राणि यावद्राज्यं भुक्तवत तस्या शस्त्र कोशे चक्ररत्नं समुत्पन्नं ततो भरतं साध्य

राज्ञाद्दष्ट पृष्टाश्च सेवका: अकालयात्रया कार्यं लोको गच्छति ततो नमुचिम' त्रिणाभणितं देव अत्र उद्याने श्रमणा समागता तेषां यो भक्तो लोक: स तद्वन्दनार्थं गच्छति राज्ञाभणितं वयमपि यास्याम नमुचिना उक्तं तर्हित्वया तत्र मध्यस्थेन भाव्यं यथाहं वादं क्षत्वातान्नि रुत्तरी करोमि राजा नमुचि सहितस्तत्रगत नमुचिनाभणितं भो श्रमणायदि यूयं धर्मं तत्वं जानीथतर्हिवदथ सर्वेपि मुनय चुद्रोयमिति क्षत्वा मौने न स्थिता: ततो नमुचिर्भृशं रुष्ट: सूरिं प्रतिभणति एष वयस्क: किं जानाति तत: सूरिभिर्भणितं भणाम· किमपि यदि ते मुखं खर्जूति इदं वच· श्रुत्वा अनेकशास्त्र विचक्षणे न चुल्लकशिष्येण भणितं भगवन् अह मेवैनं निराकरिष्यामि इत्युक्ता चुल्लकेन सवादेनिरुत्तरीक्षत' साधूनासुपरिद्वेष' गत रात्रौ च चरहत्या एकाक्येव मुनि बधार्थमागतो देवतयास्तम्भित: प्रभाते तदाश्चर्यं दृष्ट्वा राज्ञालोकेन च भृशन्तिरस्कृतौ विलक्षो भूतो गतो हस्तिनागपुरं महापद्म युव राजस्य मन्त्रीजात: इतश्च पर्वतवासी सिंहबलोनाम राजा स च कोट्टाधिपति रिति महापद्म देशं बिनाश्यकोट्टे प्रविसति ततोरुष्टेन महापद्मेन नमुचि मंत्री पृष्ट: सिंहबलराजग्रहणे किञ्चिदुपायं जानासि नमुचिनोक्तं सुष्टुजानामि ततो महापद्म प्रेरित सैन्यद्रुतोगतोनिपुणोपायेन दुर्गं भंक्ता सिंहबलो बद्ध आनीतश्च महापद्मान्तिके महापद्मे नोक्तं नमुचेयत्तवेष्टं तन्मार्गय नमुचिनोक्तं सांप्रतं वर: कोशेऽस्तु अवसरेमार्गयिष्यामि एव यौवराज्यं पालयतो महापद्मस्य कियान् कालोगत अन्यदा महापद्ममाता ज्वाला देव्याजिनरथ: कारितो अपरसात्रा च मिथ्यात्ववासितयाजिन धर्मप्रत्यनीकयालक्ष्मीनाम्न्या ब्रह्मरथ कारितोभणितश्च पद्मोत्तरो नाम राजा यथा एष ब्रह्मरथ: प्रथम नगर मध्ये परिभ्रमतु जिनरथ: पश्चात्परिभ्रमतु इदं च श्रुत्वा ज्वाला देव्या प्रतिज्ञा क्षता यदि जिनरथ: प्रथमं न भ्रमिष्यति तदा परजन्मनि ममाहार: ततो राज्ञा द्वावपि रथौ निरुद्धौ महापद्मे न स्वजननरा: परमाम धृतिं दृष्ट्वानगरान्निर्गत: केनापि न ज्ञात: परदेशे गच्छन् महाटव्यां प्रविष्ट: तत्र च परिभ्रमन् तापसालयेगत तापसैर्दत्त सम्मानस्तत्रतिष्ठति इतश्च

पाषा नगया नमिनयो राना परिवसति स च कान्ननरेन्द्रेण प्रति रुद्ध ततो महान् संग्रामो वभूवजनमेजको नष्ट तस्मान्त पुरमपोतस्ततो
नष्ट नमेनकस्य राज्ञो नागवतो नाम भार्या सामदनावनो पुत्रा सम नष्टा आगतातततापसाश्रम समाश्वासिता कुलपतिना तत्रैवस्थिता कुमार
मदनावल्यो परस्परमनुरागोजात कुलपतिनातत्माता च तयो परस्पर मनुरागोजात कुलपतिनागवत्यामाता च भणिता मदनावली यथा पुत्रिक
कि नमरसिनैमित्तिकवचन यथा चक्रवर्त्तिनस्त्व प्रथमपत्नो भविष्यति तत कथ यत्र तवाशुराग करोषि कुलपति नापि कुमारस्य विसर्जनार्थं सुत
कुमारत्वमितोगच्छ तदानो त्वरितमेव ततोनिर्गत कुमार एव मनोरथं चकार यथाह मेतस्या सङ्गमेन भरताधिपो भूत्वा ग्रामाकरनगरादिषु
सर्वत्रजिनभवनानिकारयिष्यामीति भ्रमन् कुमारोऽथ प्राप्त सिंधुनदन नाम नगर तत्रोद्यानि कामहोत्सवेनगरान्निर्गतानरानार्यैश्च विविध क्रीडाभि
क्रीडन्ति अग्निवमरि राज्ञ पट्ट हस्तो आलानस्तम्भ उनमूल्य मदह हट्टभित्तिभङ्ग कुर्वन् नगराद्बहिर्युवती जनमध्ये समायात तावत तथा विध दृष्ट्वा
दूरत प्रधावितु असमया तत्रैवस्थिता यावदसौतासामुपरिशुण्डापात करोति तावतादूरदेशस्थितेन महापद्मेन करुणा पूर्णहृदयेनाक्कितो सौ करी
सोपि वेगेन चलित कुमाराभि मुख तदानो ता सवा अपिभणति हाहाऽस्म द्रक्षणार्थं प्रहृत्तोय करिणाहस्यते एष तासु प्रलपन्तीषु पश्यन्तीषु चतयो
करिकुमारयो घोर संग्रामो बभूव सर्वोपि नागरजनस्तत्रा यात सामन्त भृत्यसहितो महसेनराजापि तत्रायात भणित च नरेन्द्रेण कुमार अनेनसम
संग्राम माकुरु कृतान्त इव दुष्टो सौतवविनाशकरिष्यतीति महापद्म उवाच राजन् विश्वस्तोभव पश्यममकलामित्युक्त्वाक्षणेन स मत्तकरिण स्वकलयावशी
कृतवान् आरुह्य त मत्तगज महापद्म स्वस्थानेनीतवान् साधुकारेण त लोका पूजितवान् यथा एष कोपि महापुरुष प्रधान कुलसमुद्भवोस्ति अन्यथा
कथमोदृग रूप विज्ञान चास्य भवति ततो राज्ञा स्वगृहे नीत्वा कुमारस्य विविधोपचारकरण पूर्वक कन्याशत दत्त तेन सम विषयसुख मनुभवतस्तस्य

महापद्म कुमारस्य दिवसास्तत्र सुखेन यान्ति तथापितां मदनावलिं हृदयान्नविस्मारयति अन्यदारजन्यां शय्यातो सौ 'वेगवत्याविद्याधर्याऽपहृतः निद्रा
त्वयेसातेन दृष्टा मुष्टिं दर्शयित्वा साकुमारेणभणिता किं त्वमेवं मामपहरसि तया भणितं कुमार शृणु वैताढ्ये सूरोदयनामनगरमस्ति तत्रेन्द्रधनुर्नाम
विद्याधराधिपतिरस्ति तस्य भार्या श्रीकान्तावर्त्तते तस्याः पुत्रीजयचन्द्रानाम्नी वर्त्तते सा च पुरुषद्वेषिणीनेच्छति कथमपि वरं ततो नरपत्याज्ञयामयासर्वत्र
वरनरेन्द्रान् विलोक्य२ पट्टिकायां लिखिताः सर्वेपि तस्यादर्शितानकोपिरूचितः अनन्तरदामयातस्यस्त्वरूपं दर्शितंतद्दर्शनानन्तरमेवसाकामावस्थयागृहीता
भणितं च तया यद्येष भर्त्ता न भविष्यति तदा वश्यं मयामर्त्तव्यं अन्य पुरुषस्य मम यावज्जीवं निवृत्तिरेव एष तस्या व्यतिकरोमया तन्मातृपितृो ज्ञापितः
ताभ्यां त्वदानयनायग्रह प्रयुक्ता अविश्वसन्त्यास्तस्याविश्वासार्थं मया इयंप्रतिज्ञा कृता यद्यहंतं त्वरितं नानयामि तदा ज्वाला कुलेज्वलने प्रविशामि तत
कुमारयदितव प्रसादेन मम मरणं न सम्पद्यते यथा च मे प्रतिज्ञानिर्वाहो भवति तथा प्रसादं कुरु ततस्तदा श्रया तया महापद्मः सूर्योदये तत्र नीतः
पतिर्मिलितः तेन च सुमुहूर्त्ते तस्याः पाणिग्रहणं कारितः पूजिता च वेगवती इतश्च जयचन्द्रायामातुल भ्रातरौ गङ्गाधरमहीधरनामानौ विद्याधरौ
खेचराधिपतिप्रचण्डौ इमंव्यतिकरं ज्ञात्वा अनेक भट सहितौ महापद्मेनसमं संग्रामार्थमागतौ महा पद्मोपि तयोरागमनंश्रुत्वा सूरोदयपुराद्बहिर्विद्याधर
भट परिवृतोनिर्गतः संलग्नस्तयो संग्राम तदानीं महापद्मेन स्यन्दनाः कुञ्जरा अश्वा सुभटाः परबल सत्काः सर्वेपि बाणैर्विद्धाः भग्नं स्वबलं दृष्ट्वा
गङ्गाधरमही धरौ स्वयमुत्थितौ महापद्मेन उभा वपि हतौ ततो लब्ध जयः समहापद्मः उत्पन्न स्त्री वर्जं सर्वरत्नं प्राप्तनवनिधिर्द्दातिं शत्सहस्र अमण्डले
श्वरसेवितपादपद्म परिणीत एको न चतुः षष्टि सहस्रान्तं पुरी हयगजरथपदातिकोश सम्पन्नो नवम चक्रवर्त्ती जातस्तदापि षट् षण्डभरतराज्यं
समदनावल्यारहित नीरसं मन्यते अन्यदातस्मिन्ना अमपदे गतस्य तस्य महापद्म चक्रिणः तापसैर्महान् 'सत्कारः कृतः जनमेजयेनापि राज्ञामदनावली

तस्य दृष्टातेन परिणीताप्यरोरेव बभूव ततो महापद्म चक्रवर्त्ति ऋद्धि समेतोहस्तिनागपुर प्राप्त प्रणनाम जननीजनकपदान् ताभ्यामधिकस्नेहेन प्रेचित पर्यातरेवैव ममयस्ततो मुनि सुव्रतस्वामिशिष्यो नागसूरी ततोनिर्गत स परिवार पद्मोत्तरराजातवन्दित्वा पुरोनिषण्ण गुरुणा च तत् पुरो भव निर्वेदाननो देशनाकृता तां श्रुत्वा वैराग्यमापन्नो राजा गुरु प्रत्येवमुवाच भगवन्नह राज्य स्वस्य कृत्वा भवदन्तिके प्रव्रजिष्यामि गुरुणाभणित मा प्रतिबन्ध कुर्विति गुरु प्रणम्य नगरे प्रविष्टोराजा आकारितामन्त्रिण प्रधानपरिजनाविष्णु कुमारश्च सर्वेषा मपि राज्ञा एवमुक्त भो भो श्रुयतां भवद्भि मसारासारताप्रमेतावत्कालं वञ्चित यच्छ्रामण्य नानुष्ठितवान तत साम्प्रत विष्णु कुमार निजराज्ये भिषिच्य प्रव्रज्या गृह्णामि ततो विष्णु कुमारेण विज्ञप्त तात ममापि किं पाकोपमैभोगै यत तवमार्गमेवानुसरिष्यामि ततो विष्णु कुमारस्य दीक्षानिश्चय ज्ञात्वा पद्मोत्तरराज्ञा महापद्म आकारितो भणितश्च पुत्र मभिदं राज्य प्रतिपद्यस्वविष्णु कुमारोह च प्रव्रज्यां प्रतिपद्याव अथ विनीतेन महापद्मेन च भणित तात निजराज्याभिषेक विष्णु कुमारस्यैव पुत्र मध पुनरेतस्यैवाज्ञा प्रतीच्छको भविष्यामि राज्ञाभणित वत्समयोक्तोप्यय राज्य न प्रतिपद्यते अवश्य मय मया सम प्रव्रजिष्यते तत शोभनदिवसे महापद्मस्य कृतो राज्याभिषेक विष्णुकुमारसहित पद्मोत्तरराजा सुव्रतसूरिसमीपे प्रव्रजित ततो महापद्मोविख्यात शासनचक्रवर्त्तीजात स्वमाद्य मपर मायकारितो तौ द्वावपिरथौ तयैवमा महापद्मचक्रिणातु जननीसत्को जिनरथोनगरीमध्ये भ्रामित जिनप्रवचनस्य कृता उन्नति ततप्रभृति बहुलोको धर्मोद्यममतिश्चिन शासन प्रतिपन्न तेन महापद्मचक्रिणा सर्वस्मिन्नपि भरतक्षेत्रे ग्रामाकर नगरोद्यानादिषु कारितानि जिनायतनानेक कोटिलक्ष प्रमाणानि पद्मोत्तरमुनिरपि पालित निष्कलङ्क श्रामण्य शुद्धाध्यवसायेन कर्मजाल क्षपयित्वा समुत्पन्न केवलज्ञान सम्प्राप्त सिद्धिमिति विष्णुकुमारमुनि रपि उग्रतपोविहारनिरतस्य वर्द्धमान ज्ञानदर्शनचारित्र परिणामस्य आकाशगमनादि वैक्रियलब्धय उत्पन्ना स कदाचिन्मेरुवत्त गदेहो गगने व्रजति

कदाचिन्मदनवत् दृति रूपवान् भवति एवं नानाविधलब्धिपात्रः संजातः इतश्चते सुव्रताचार्याः बहुशिष्यपरिवृता वर्षा रात्रस्थित्यर्थं हस्तिनागपुरीयाने समायाताः ज्ञाताश्च तेन विरुद्धेन न मुचिना अवसरं ज्ञात्वा राज्ञा विज्ञप्तं यथा पूर्वप्रतिपन्नं मम वरंदेहि चक्रिणा उक्तं यथेष्टं मार्गय नमुचिना भणितं राजन्नहवेद भणितेन विधिनायज्ञं कर्तुमिच्छामि अतो राज्यंमेदेहि चक्रिणानमुचिः स्वराज्येभिषिक्तः स्वयमंतपुरे प्रविश्य स्थितः नमुचिर्यज्ञपाटकमा गम्य यागनिमित्तं दीक्षितो बभूव राज्येभिषिक्तस्य तस्य वर्द्धापनार्थं जैनयतीन् वर्जयित्वा सर्व्वेपि लिङ्गिनोलोकाश्च समायाताः नमुचिना सर्वलोक समक्षं उक्तं सर्व्वेपिलोका मम वर्द्धापनार्थं समायाता जैनयतयः कोपिनायाता एवंच्छलं प्रकाश्य सुव्रताचार्या आकारिताः आगताः नमुचिनाभणिताः भो जैनाचार्यायो यदा ब्राह्मणोवा क्षत्रियोवा राज्यं प्राप्नोति स तदा पाषण्डैरागत्य द्रष्टव्यः इयंलोकस्थितिः यतो राजरक्षितानि तपोधनानि भवंति यूयं पुन स्तब्धाः सर्वे पाषण्ड दूषकाः निर्मर्यादामां निंदथः अतो मदीयं राज्यं मुक्ताऽनयत्र यथासुखं व्रजतयोयुष्माकं मध्ये कोपिनगरे भ्रमन् दृश्यते सर्वेवध्यो भविष्यति सुव्रताचार्यैरुक्तं राजन्नस्माकं राजवर्द्धापनाचारो नास्ति तेन वयं त्वद्वर्द्धापन कृते नायाताः नचवयं किञ्चिन्निंदामः किंतु समभावा स्तिष्ठामः ततः नरुष्टामः प्रतिभणति यदि श्रमणं सप्तदिनोपरि अहं द्रक्ष्ये तमहमवश्यं मारयिष्यामि नात्र सन्देहः एतन्नमुचिवाक्यं श्रुत्वाचार्याः स्व स्थानमायाताः सर्व्वेपि साधवः पृष्टाः किमत्र कर्त्तव्यं तत एकेन साधुना भणितं यथा सदासेवित तपोविशेषो विष्णुकुमारनामा महामुनिः सांप्रतं मेरु पर्व्वतचूलास्थो वर्त्तते स च महापद्मचक्रिणो भ्रातास्ति ततस्तद्वचनादय मुपशमिष्यति आचार्यैरुक्तं तदाकारणार्थं यो विद्यालब्धि संपन्नः स तत्रव्रजतु तत एकेन साधुना उक्तं अहं मेरुचूलां यावद्गगनेगन्तुं शक्तोस्मि पुनः प्रत्यागन्तुं न शक्तोस्मि गुरुणा भणितं विष्णुकुमार एवत्वामिहानेष्यति तथेति प्रतिपद्य स मुनिराकाशे उत्पतितः क्षणमात्रेण मेरुचूलायां प्राप्तः तमायातं दृष्ट्वा विष्णुकुमारेण चिन्तितं किञ्चिद्गुरुकं संघकार्यं समुत्पन्नं यदयं मुनिर्वर्षाकाल

मध्ये समायात तत समुनिर्विष्णुकुमार प्रणम्य आगमन प्रयोजन कथितवान् विष्णुकुमारस्त मुनि गृहीत्वास्तोकवेलया आकाशमार्गेण गजपुरे प्राप्त वन्दितास्तेन गुरव गुर्वाज्ञया साधुसहितो विष्णुकुमार मुनिर्नमुचि पर्षदिगत सर्वै सामन्तादिभिर्वन्दित नमुचिस्तु तथैव सिंहासने तस्थिवान् नमनाक विनय चकार विष्णुना धर्मकथन पूर्व नमुचेरेव भणित वर्षाकाल यावन्मुनयोऽत्र तिष्ठन्ति नमुचिना भणित किमत्र पुन पुनर्वचन प्रयासेन पञ्चदिवसान् यावन्मुनयोऽत्र तिष्ठन्तु विष्णुना भणित तव उद्याने मुनय स्तिष्ठन्तु तत सजातामर्षेण नमुचिनारेव भणित सर्वपाखण्डाधमैर्भवद्भिर्मद्राज्ये स्थेय मद्राज्य त्वरितत्यजत यदि जीवितेन कार्य तत समुत्पन्नकोपानलेन विष्णुनाभणित तथापि त्रयाणा पदान स्थान देहि ततो भणित नमुचिनादत्त त्रिपदीस्थान पश्यन्ति पश्चा बहिर्द्रक्ष्यामि तस्य शिरश्छेद करिष्यामि तत स विष्णुकुमार क्षत नानाविधरूपो वृद्धि गच्छन् क्रमेण योजनलक्ष प्रमाणरूपोजात क्रमाभ्या दर्दर कुर्वन् ग्रामाकरनगर सागराकीर्णा भूमि प्रकम्पयन् शिखरिणा शिखराणिपातयतिस्मत्रिभुवने क्षोभ कुर्वन् स मुनि शक्रेणज्ञात तस्य कोपोपशान्तये शक्रेण गायनदेव्य प्रेषिता ताश्चैव गायन्तिस्मसपरसन्तावश्यो धर्म्मयणदावग्गोदुग्गद्गगमणहेउ कोवोताश्वोयसमकरेसु भयवति एवमादीनि गीतानितावारवार श्रावयन्तिस्म समुनि नमुचिसिंहासनात्पातितवान् दत्तवान् पूर्वापर समुद्रपाद सर्वजन भापयतिस्म ज्ञातवृत्तान्तो महापद्मचक्री तत्रा यात तत्र सकलसमजेन सुरासुरैश्च शान्तिनिमित्त विविधोपचारै रुपशामित तत्प्रभृति विष्णुकुमारस्त्रिविक्रम इतिख्यात उपशान्तकोप समुनिरालोचित प्रतिक्रान्त उग्र यतउक्त चार्षे एए गच्छमिकुलगणसङ्घे अचेइ अविणामेआलोयपडिक्कन्तो सुद्धाजक्लित्ताविउला १ निष्कलङ्क श्रामन्यमनुपाल्य समुत्पन्नकेवल स विष्णुकुमार सिद्ध गत महापद्म चक्रवर्त्यपि क्रमेण दीक्षा गृहीत्वा सुगतिभागभूत् इति महापद्म दृष्टात एगछत्त पसाहित्ता महि माणनिसूरणो हरिसेणो मनुस्सिन्दो पत्तोगइमणुत्तर ४२ पुनर्मुने हरिषेणो मनुष्येन्द्रो हरिषेणनामा नवमचक्री अनुत्तरां गति सिद्धिगति प्राप्त कि कृत्वा महोपृथ्वी

एकछतां प्रसाध्य प्रपाल्य कोदृशो हरिषेणो माणनिसूरण: अहङ्कारि शत्रु मानदलन: ४२ अत्र हरिषेण दृष्टान्त: काम्पिल्यनगरे महाहरि राज्ञी मेरा देव्या. कुक्षौ चतुर्दश स्वप्न सूचितो हरिषेणनामा चक्रवर्त्ती समुत्पन्न: क्रमेण यौवनं प्राप्त: पित्राराज्ये स्थापित: उत्पन्नानि चतुर्दशरत्नानि प्रसाधितश्च भरतं क्षत पट्टाभिषेको हरिषेण उदारान् भोगान् भुञ्जन्कालं गमयति अन्यदा लघुकर्म तया भववासाद्विरक्त: एवं चिन्तितुं प्रवृत्तः पूर्वंकृत सुकृत कर्मवशेनमयात्र दृशोरिद्धि: प्राप्ता: पुनरपि परलोक हितं करोमि उक्तञ्च मासैरष्टभिरह्नावा पूर्वेण वयसा यथा तत्कर्त्तव्यं मनुष्येण यथान्ते सुखमेधते १ एवमादि परिभाव्य पुत्रं राज्ये निवेश्य निष्क्रान्त उत्पन्नकेवलश्च सिद्धिङ्गत. पञ्चदशधनुषि उच्चत्वं दशवर्षसहस्रायुश्च संजातमिति हरिषेण चक्री दृष्टान्तः अन्वितो राय सहस्से हिंसुपरिच्चाईदमच्चरे जयनामो जिणक्खायं पत्तोगइ मणुत्तरं ४३ जयनामा एकादशश्चक्री जिनाख्यातं जिनोक्तं धर्मं चरित्वा च अनुत्तराङ्गतिं प्राप्त: कोदृशो जयनामा राज सहस्रैरन्वित: नृपसहस्रेण परिवृतोजैनींदीक्षां अचरत् पुन: कोदृशो जयनामदम परित्यागी सम्यक् परित्यागी ४३ अत्र जयनामचक्रवर्त्तिदृष्टान्तं: राजगृहे नगरेवप्रगायाराज्ञ्या: कुक्षौ चतुर्दश स्वप्नसूचितो जयनामा पुत्रोजात: क्रमेण संसाधित भरतश्चक्रीजातं राज्यश्रिय मनुभवन् भोगेभ्यो विरक्तोजात: एवं चिन्तितवान् सुचिरमपि उषित्वास्यात् प्रियैर्विप्रयोग: सुचिरमपि चरित्वा

सूत्र

एगच्छत्तं पसाहित्तामहिमाणनिसूरिणो हरिसेणो मणुस्सिंदोपत्तोगइमणुत्तरं ४२॥ अन्निओरायसहस्सेहिंसुपरिच्चाईदमं

भाषा

पृथ्वो भोगवोने महिं अरिमांनदलन: पृथ्वीने विखेवेरीनोमानतेहनो दलणहार हरिषेणो मनुष्येंद्र: हरिषेण मनुष्यमांहि इंन्द्रप्राप्त. गतिं अनुत्तरां उत्तमां उत्कृष्टांगोहतापधानगतमांहिं ४२ अन्वित राजसहस्रैर्युत: हजारराजवियां साथे सुष्टुपरंत्यागी दानशील संयमंचकार राज छोडीनेंदिक्षालीधी

नास्तिभोगेषु त्वसि सुचिरमपि विचिन्त्यत्वायमेकोऽपि धर्म एव स्वेव मुपागतो निष्क्रान्तोऽनुक्रमेण सिद्ध द्वादशधनुर्देहमानो वर्षसहस्रायुश एषा यामोदिति जयचक्रिदृष्टान्त दसन्नरज्ज मुइयच इत्ताण मुणीचरे दसन्नभद्दो निक्खन्तो सक्कसक्केण चोईओ ४४ दशार्णभद्रोराजा साचात् शक्रेण चोदित प्रेरित सन् निष्क्रान्त गृहस्थावस्थातो निसृत पुनर्मोनी सन् अचरत् मुने कर्म मौन मौन अस्यास्तीति मोनि मुनिर्भूत्वा विहार अकरोत् किं कृत्वा दशार्ण राज्य त्यक्ता दशार्णाना देशाना राज्य दशार्णराज्य कीदृश दशार्णराज्य मुदित समृद्ध अत्र दशार्णभद्रदृष्टान्त अस्तिवराटदेशे धनपुर नाम सन्निवेशे तत्र कोमदत्तर पुत्रोस्ति तस्य भार्या दुस्शोलानगरा रचकेण सम चौर्यरति कुर्वन्त्यस्ति अन्यदा तत्र सन्निवेशे नटैर्नाट्य प्रारब्ध तत्र कौतु कं स्त्रोवेष कृत्वा नृत्यन्ति घनोलोक दर्शनाय मिलितोसि सापि तत्रगतास्ति सास्त्रीरूपधर त नर्त्तक प्रेक्ष्य पुरुषश्च ज्ञात्वा कामविह्वलाजाता एक तत्पुरुष प्राह यद्यसौ अनेन वेषेण एषमद्गृहे समागत्य मया सम रमते तदाहमस्मै अष्टोत्तरशत द्रव्य ददामि तेन प्रतिपन्न भणित त्वयवहि एष तव गृहे त्वरितमेव समायास्यति तत सा स्वगृहेगता एषोपि तत् पृष्ठे तद्गृहेगत तया पादशोधनदत्त स भोक्तु मुपविष्ट तथा चौर्य्याभृत भाजन यावदसौ भ क्ते तावतारचक स्तत्रायातो वदत् कपाटमुद्घाटयेति सा नटपुरुषमुवाच त्व तिलगृहोदरे प्रविश्ययावदेन निवर्त्तयामि सतिल गृहोदरे प्रविष्ट बुभुचित सन् कोष्ठस्थान् तिलान् भूक्षयखादति आगत कपाट निधीयतत्रा रच चोरेयोभ्रत पात्र दृष्ट्वा सभोक्तु मुपविष्ट यावत्सैमतितता

सूत्र चरे जयनामो जिणक्खाय पत्तोगइ मणुत्तर ४३ ॥ दसन्नरज्ज मुइयचइत्ताण मुणीचरे। दसन्नभद्दो निक्खतो सक्ख

भाषा जयनामा चक्रवर्त्ति जिने आख्यात कथित प्राप्त गति अनुत्तरा अनुत्तरगति मोचतिहांपोहता ४३ दशार्णराज्य त्यक्त दशार्ण भद्रराजाइ राज्य छोडीने त्यक्तामुनिं चरेत् त्यजीनेयतीहुश्रो दशार्ण भद्रराजा प्रव्रजित दशार्ण भद्रदीघालोघी साचात् शक्रेण प्रेरित प्रत्यक्ष इन्द्रे प्रेर्यो ४४ नमि

वत्तस्था· पतिर्द्वारे समायातः तया उक्तं तलारचस्य शीघ्रमुत्तिष्ट प्रविशास्मिन् तिलगृहोदरे परंदूरे नगन्तव्यं कोणे सर्पस्तिष्ठति त्वया तत्र प्रदेशेन
गन्तव्यं प्रविष्टस्तलारचस्तिल गृहोदरे पतिस्तत्रायात· चौरेयीपात्रं दृष्ट्वा तेन पृष्टं किमेतत् तया उक्तं बुभुचितास्मीति जेमामि स उवाच त्वं तिष्ट अहं
पथ श्रान्तत्वाद्विशेषतो बुभुचितो स्मीति प्रथमं जेमामि तया उक्तं अद्याष्टमीवर्त्तते कथमस्नातो जेमसि ते नोक्तं त्वं स्नानासीति तवस्नाने न मम स्नान
जातमिति प्रोच्य स भोक्तुमुपविष्टः इतश्चतलारचक नट पूत्कार श्रवणे सर्पोयमितिे पूत्करोतीति भीतस्तलारचतिलोदरान्निर्गतो नष्टस्तु तोयमेवावसर
इति ज्ञात्वा स्त्री वेष धरोनरोपि नष्टः पत्याष्टष्टासास्त्री किमेतत् तया उक्तं मयालं साम्प्रतमेव वारितः यद्यष्टम्यामयत्नमस्नातोमाभोजनं कुरुत्वया वाक्या
नेनाद्यभोजनं कर्त्तुमारब्धं अतस्त्वयातदृक्षे सदावसन्तौ इमौ पार्वती महेश्वरौ नंष्टागतौ मदहर उवाच हादुष्ट कृतं मया तं पश्चात्तापं कुर्वन् पुनस्तां
उवाच कोप्यस्त्युपायः यदेतौ पुनरायात· सा उवाच यदिन्यायेनवित्तं उपार्ज्य पूजां कुर्य्यास्तत पुनरेतौ तव गृहे समायास्यतः ततो गतोमदोहरोदेशान्तरे
दशार्णदेशे इचुवाटक कर्म्मणि लग्न दशगद्यानक सुवर्णं लब्धं तथाप्यल्पमिति ज्ञात्वा न तुष्टिं प्राप इतस्ततो भ्रमन् एकदाटव्यां प्रविष्टः पिप्पलतरुमूले
विश्रामं गृह्णाति अत्रांतरे अश्वापहृतो दशार्णभद्रस्तत्रायातस्तं दृष्ट्वा राज्ञापृष्टं कस्त्वं किमर्थमत्रायातः स उवाच यथा स्थितं वृत्तान्तं राज्ञाचिंतितं
असौस्त्रियाविप्रतारितः परदेशे भ्रमन्नस्ति ततस्तस्य स्त्री चरितं उक्त्वासगृहेनीत्वा भोजनादिविहितं राज्ञाचितितं अहो असत्यदेवेपीश्वरादौ कीदृशी
भक्तिर्वर्त्तते मया सत्यदेवेपि श्रीमहावीरेविद्यमानेपि तादृशं भक्ति प्रपञ्चनं न विहितमिति राजायावच्चिंतयति तावदेक प्रतिहार पुरुषेण राज्ञोग्रे एव
मुक्तं भगवान् श्रीमहावीरः समायातः राजापरितुष्टश्चिन्तयति यदिनामेष मदहर पुत्रो विशिष्टविवेकरहितोपि निजदेव पूजा सम्पादनार्थमेव परिक्लि
श्यते ततोस्माभिरीदृशैः सारासारविवेचन विचचणैः समग्रसामग्र्यात्रिभुवनचिन्तामणि कल्पस्य श्रीमहावीरस्य विशेषेण पूजाकार्येति ततः कल्येहं

सवहा तथा योमहावोर वन्दिष्ये यथा केनाप्येव न वन्दित पूर्वं ततोद्वितीय दिवसे कृत प्रभात कृत्य स्नान विलिप्तालङ्कृत देह स्मारूप
योवन लावण्यनेपथ्ययुक्त सर्वाङ्गोपाङ्गालङ्कृतयाचतुरङ्गण्यासेनया सहितो बहुभिर्मन्त्रि सामन्ते श्रेष्टिसार्थवाहैश्च परिवृत भभादि वादित्र
श्रेणिबधिरिति दिगन्तराल्लो मर्थ्यं गोयमानगुणो नृत्यतोभिविलासिनोभि पोषित नेत्ररसो गजेन्द्रारूढो दशार्णभद्र भूपतिर्भगवतो वन्द नार्थ
मायात विशुद्धभावेन भगवान् वन्दित राजा मदहरपुत्रस्य हर्षितवान् ममान्तरे शक्रेण चिन्तित मत्कृतया महाविभूत्यासौ दशार्णभद्र प्रति
बोध याम्यनाति शक्र इद्गयों विभूति विकुर्वितवान् तथाहि ऐरावण हस्तिनोष्टौ दन्ता विकुर्विता दन्ते २ अष्टौ पुष्करिण्यो विकुर्विता पुष्क
रिण्यां २ भग्ने २ पद्मानि पद्मे २ ष्ट २ पत्राणि पत्रे २ द्वात्रिंशद्बद्धनाट्यानि अनया विभूत्या ऐरावणारूढेन शक्रेण प्रदक्षिणी कृत्य भगवान् वन्दित
त तादृश दृष्ट्वा दशार्णभद्रेण चिन्तित अहो खलु तुच्छोऽह यत्तुच्छया विभूत्यागर्व कृतवान् यत [redacted] अहिंद्र भहार्थोवेषमिद्रुम्नि उत्तणाणीयागर्ब्बद
उत्तान्यकरोद्गु मूसगोवाड्डिमासम्म १ अनेन शक्रेण प्रागभवे शुद्धो धर्मं कृत तत ईदृशीलब्धिर्लब्धा ततोऽहमपितमेव धर्म करोमि किं ममाम विषादेन
उक्तञ्च समसत्त्या यथय मन् पुरुप पुरुष किमनत्र मभ्येति पुण्यैरधिकतर चेत्तनुसोपि करोतु तान्येव १ इत्यादि सवेगभावनया प्रतिबुद्ध स्वयोपगम
मात्तपारित्रमोहनोयोभगवन्त प्रत्येव दशार्णभद्रोऽवादीत् भगवन् भवचारकादह निर्विण्णोऽस्मि ततश्चारित्र प्रदानेनानुग्रह मम कुरुभगवता तदानीमेव
महर्षरेण सम स दशार्णभद्रोदीक्षित शक्रेण तदावंदित उक्त च श्रमणमार्गग्रहणीनत्वयैवजित येने हृष्टो ऋद्धि सहसापरित्यक्ता पूर्वं त्वयाभिमान
ग्रन्थेन द्रव्य वन्दन कृतमिति त्वमेव धनगोनाहमिति दशार्णभद्रमुने प्रशसा कृत्वाशक्र स्वस्थान गत वा निति दशार्णभद्र दृष्टांत [नमीनमेइ अप्पाण
सक्ख सक्केण चोइओ चइऊणगेहं वइदेहो सामन्ने पज्जुवट्ठिओ ४५ पुनर्हं मुनेविदेहेप भवो वैदेही विदेहदेशस्वामीनमिनामाट्रपोगेह स्टहवासन्त्यक्त्वाश्रामण्ये

साधु धर्मं पर्युपस्थित: चारित्रयोग्यानुष्टानं प्रत्युद्यतो भूदित्यर्थ: पुन: समुनि: साचात् ब्राह्मण रूपेण शक्रेण प्रेरित: सन् ज्ञानचर्यायां परिचित: सन् आत्मानं नमि इति नयेस्थापयति क्रोधादिकपायरहितो भवतीत्यर्थ: ४५ अथ द्वाभ्यां गाथाभ्यां चतुर्णां प्रत्येकबुद्धानां एकसमये सिद्धानां नामानग्राह करकण्डूकलिंगेसु पञ्चालेसु यदुम्मुहो नमीरायाविदेहेसु गन्धारेसुयनिग्गई ४५ एवं नरिन्दवसहा निक्खन्ताजिणसासणे पुत्ते रज्जे ठवेऊण सामन्नेपज्जु

सूत्र

सक्केण चोइओ ४४॥ नमीनमेइ अप्पाणं सक्खं सक्केण चोइओ। चइऊणगेहंवइ देहीसामन्ने पज्जुवट्ठिओ ४५ ॥ कर कंडुकलिंगेसु पंचालेसु यदुम्महे। नमीराया विदेहेसुगंधारेसु यनग्गई ४६॥ एवं नरिंद वसहा निक्खंताजिणसासणे पुत्तं रज्जे ठविऊणं सामन्ने पज्जुवट्ठिया॥ ४७॥ सोवीर राय वसहो चइऊणं मुणीचरे। उदायणो पव्वइओ

भाषा

राजर्षि आत्मान नयति नमिराजाइ आपणो आत्माने नमे साचात् शक्रेणप्रेरित: प्रत्यचइंद्रे प्रेर्यो त्यक्ता गृहत्ववैदेही घरछांडीने विदेहदेश छांड्यो श्रामण्ये पर्युपस्थित चारित्रने विखे उठ्यो ४५ करकंडू कलिंगेषू करकंडू राजाइ कलिंगदेश छांड्यो पंचालेषु पंचालदेशेषु दुमुखो बभूव पंचालदेशने विखे दुम्मुहहुओनमीराजा विदेहेषु विदेहदेशेषु नमीराजाइ विदेहदेशनो राज्यछांड्यो गधारेषु नग्गति: गंधारदेश नगई राजाराज्य छोड्यो ४६ एवं नरेंद्र वृषभा: एतलाए राजा वृषभ समानधोरी निष्क्राता जिनशासने जिनशासनने विखे दीचालीधी पुत्रं राज्ये स्थापयित्वा पुत्रने राज्य देईने श्रामण्ये पर्युपस्थिता: चारित्रलेइ सावधान धर्मने विखे उद्यत हुआ ४७ सोवीरराज राजा वृषभ: सोवीरदेशनो राजा वृषभसमान त्यक्ता मुनि चरेत् त्यजीने मुनीश्वर हुआ उदायनराजा राज्यंत्यक्ता: प्रव्रजित उदाई राजाइ राज्य छोडीने दीचालीधो प्राप्तोगतिं अनुत्तरां प्राप्त हुयो उत्तमगति ४८ तथैव

वहिया ४६ हे मुने करकण्डुराजा कलिङ्गेषु देशेष अभूदित्याध्याहार च पुन पाञ्चालेषु देशेषु द्विमुखोनृपोभूत् विदेहेषु देशेषु नमीराजाभूत् च पुनर्गन्धा
रेष गन्धारनाम सुदेशेष निर्गतिनामाराजाभूत् एते चत्वार करकण्डू १ द्विमुख २ नमि३ निर्गतिनामानोनरेन्द्र वृषभा राजमुख्या पुत्रान राज्ये स्थाप
यित्वा पश्चात् जिनशासने जिनाज्ञाया श्रामण्ये चारित्रे पर्यवस्थिता चारित्र योग्य क्रियानुष्ठानतत्परा सन्तोनि क्रान्ता ससारात् नि सृता भव
भ्रमणात् विरता आसन इत्यध्याहार सिद्धि प्राप्ता इति भाव एतेषा चतुर्णा प्रत्येक बुद्धानां कथा प्रबन्ध पूर्व नमेरध्ययनतोज्ञेया सौवीररायवसभो च
इत्ताण सुगोचरे उदायणो पव्वइओ पत्तोगइ मणुत्तर ४८ सौवीर राजवृषभ सौवीराणा देशाना राजा सौवीरराज सचासौवृषभश्च सौवीरराज वृष
भोराज्यभार धरण समर्थ सौवीरदेश भूपमुख्य एतादृश उदाय न नामाराजा वीतभयपत्तनाधीशो मौन मुनिधर्म आचरत् किं कृत्वा राज्य परित्यज्य
सच उदायन प्रव्रजित सन् अनुत्तरा प्रधाना गति प्राप्त अथोदायन भूपदृष्टान्त भरतक्षेत्रे सौवीरदेशेवीतभयनाम नगरे उदायनो नाम राजा
तस्य प्रभावती राज्ञी तयो पुत्रोऽभीचिनामाऽभवत् तस्य भागिनेय केशीनामाभूत् स उदायनराजा सिन्धुसौवीर प्रमुख षोडशजनपदानावीत भय
प्रमुख त्रिशत त्रिषष्टि नगराणा महासेन प्रमुखाणा दशराज्ञा बद्धमुकुटाना छत्राणा चामराणा च ऐश्वर्य पालयन्नस्ति इतश्चपाया नगर्या कुमारनन्दी
नाम सुवर्णकारोऽस्ति स च स्त्रीलम्पटो यत्र २ सरूपा दारिका पश्यति जानाति वा तत्र पञ्चशत सुवर्णानि दत्वा ता परिणयति एवञ्चतेन पञ्चशतकन्या
परिणीता एकस्तम्भ प्रासाद कारयित्वा ताभिस्सम क्रीडति तस्य च मित्र नागिलोनाम श्रावकोऽस्ति अन्यदा पञ्चशैलद्वीप वास्तव्यहासाप्रहासाख्य तयोस्त
तयोर्भर्त्ता विद्युन्माली नाम देवोऽस्ति सोन्यदाच्युत ताभिश्चिन्तित कोपि व्युद्ग्राहयाम सोऽस्माक भर्त्ता भवति स्वयोग्यपुरुष गवेषणाय इतस्ततो
भ्रमन्त्यौ ताभ्या चम्पानगर्या कुमारनन्दी सुवर्णकार पञ्चशत स्त्री परिवृतो दृष्ट ताभ्या चिन्तित एष स्त्रीलम्पट सुखेन व्युद्ग्राहयिष्यते

कुमारनन्दो भणतिके भवंत्यौ कुतः समायाते ते आहतु आवां हासा प्रहासा देव्यौ तद्रूप मोहित कुमारनन्दी सुवर्णकारस्तेदेव्यौ भोगार्थं प्रार्थित वान् ताभ्यां भणितं यद्यस्मद्भोगकार्यं तदा पञ्चशैलद्वीपं समागच्छेः एवं भणिते देव्यौ उत्पतिते गते स्वस्थानं राज्ञः सुवर्णं दत्वापटहं वादय तिस्म कुमारनन्दि सुवर्णकारं यः पञ्चशैलद्वीपं नयति तस्य स धनकोटिं ददाति एकेन स्थविरेण तत्पटहः स्पृष्टः कुमारनन्दिना तस्य कोटि धनं दत्त स्थविरोपि तद्धनं पुत्राणां दत्वा कुमारनन्दिना सहयान पात्रमारूढः समुद्रमध्ये प्रविष्टः यावद्दूरेगत स्तावदेकं वट दृष्ट्वान्स्थविर उवाच तस्य वटस्याधः दूरंवाहनं निर्गमिष्यति तत्र जलावर्त्तोस्तीतिवाहनं भंक्ष्यति त्वं तु एतद्वटशाखामाश्रयेः वटेत्र पञ्चशैलद्वीपात् भारण्ड पक्षिणस्स मायास्यन्ति संध्यायां तच्चरणेषु स्वं वपुः स्ववस्त्रेण दृढं बध्नीयाः ते च प्रभाते इत उड्डीना पञ्चशैलं यास्यन्ति त्वमपितैः समं पञ्चशैलं गच्छेः स्थविरेण एव मुच्यमाने तद्वाहनं वटाधोगतं कुमारनन्दिना वटशाखावलम्बनं कृतं भग्नश्च तद्वाहनं कुमारनन्दी तु भारण्डपक्षि चरणावलम्बेन पञ्चशैले गतः हासा प्रहासाभ्यां दृष्टः उक्तश्च तव एतेन शरीरेण नावाभ्यां भोगो विधीयते स्व नगरे गत्वा गुष्टत आरभ्य मस्तकं यावज्ज्वलनेन स्व शरीरंदह यथा पञ्चशैलाधीशो भूत्वाऽस्मद्भोगेच्छां पूर्णीं कुरु तेनोक्तं तत्राहं कथं यामि ताभ्यां करतले समुत्पाद्य स नगरोद्याने मुक्तः ततोलोकस्तं पृच्छति किं त्वया तत्राश्चर्यं दृष्टं स भणति दृष्टं श्रुतं अनुभूतं पञ्चशैल द्वीपं मया यत्र प्रशस्तेहासा प्रहासाभिधे देव्यौस्तः यत्र कुमारनन्दिना तत्र स्वांगुष्ठेऽग्निमाधा यित्वा मस्तक यावत् स्व शरीर ज्वालयितु मारब्ध तदा मित्रेणायं वारितः भोमित्र तवेदं कापुरुषजनो चितं चेष्टितं न युक्तं महानुभाव दुर्लभं मनुष्य जन्म माहारयः तुच्छमिदं भोगसुखमस्ति किं च यद्यपि त्वं भोगार्थी तथापि स धर्मानुष्ठानमेव कुरु यत उक्तं धणश्री धणच्छियाणं कामत्थीणञ्च सव्व कामकरो सग्गपवग्गसंगमहेउ जिणदेसिओ धम्मो १ इत्यादि शिक्षावाक्यैर्मित्रेण सवार्यमाणोपि इंगिनी मरणेन समृतः पञ्चशैलाधिपतिर्जातः तस्मिन्नवस्र

श्रावकस्य महान्खेदोजात अहो भोगकार्ये जनाइत्थ क्लिश्यन्ति जानन्तोपिवथ किमत्र गार्हस्थेस्थिता अ इति स श्रावक प्रव्रजित क्रमेण कालं कृत्वा अच्युत देवलोके समुत्पन्न अवधिनास स्व वृत्तान्त जानातिस्म अन्यदा नन्दीश्वर यात्रार्थं सर्वे देवेन्द्राश्चलिता स श्रावकदेवोपि अच्युतेन्द्रेण सम चलित तदा पञ्चशैलाधिपते स्तस्य विद्युन्मालिनाम्नो देवस्य गले पटहोलग्न उत्तारितोनोत्तरति हासा प्रहासाभ्या उक्त इय पञ्च शैलद्वीपवासिनो स्थिति यत् नन्दीश्वरद्वीपयात्रार्थं चलिताना देवेन्द्राणा पुर पटह वादयन् विद्युन्मालि देवस्तत्रयाति ततस्त खेद माकुलगललग्न इम पटह वादयन् गीतानि गायन्तीभ्यां आवाभ्यांसह नन्दीश्वरद्वीपे याहि तत स तथा कुर्व्वन् नन्दीश्वरद्वीपोद्देशेन चलित श्रावकदेवस्त स खेद पटहवादयन्त दृष्ट्वा उप योगे नोपलक्षितवान् भणति च भोल मां जानासि स भणतिक शक्रादिदेवान् न जानाति ततस्त श्रावकदेव तस्य स्व प्राग्भवस्वरूप दर्शयतिकसर्व पूर्व वृत्तान्त माख्याति तत सवेगमापन्न सदेवो भणति तदानीमहं किं करोमि श्रावकदेवो भणति श्रीवर्द्धमान स्वामिन प्रतिमा कुरु यथा तव सम्यक्त्व सुस्थिर भवति यत उक्त जोकारवेइ जिण पडिमजिणाण जियरागदोस मोहाण सो पावेइ अन्नभवे सुहजणण धम्मवररयण १ अन्यच्च दारिद दोहग्ग कुजाइ कुसरीर कुगइ कुमइओ अवमाणरोयसोआ नहुन्ति जिण बिम्बकारिण २ तत स विद्युन्माली महाहिमवच्छिखराद्गोशीर्षं चन्दन दारूण्यानयित्वा श्रीवर्द्धमानस्वामि प्रतिमा निवर्त्तितवान् ताश्चमञ्जूषायां क्षिप्तवान तस्मिन्नवसरे पश्यासान यावदितस्तती भ्रमत्प्रवाहण वायुभिरास्फाल्य मान विलोकितवान् तत्रगत्वा चासौ त उत्पात उपशामितवान् सां यात्रिकाणा चता मञ्जूषादत्तवान् भणितवाश्च देवाधिदेव प्रतिमाचात्रास्ति यत्रपेय विशेष पूजामाप्नोति तत्रैषदेया देवाधिदेवनाम्नैवेय मुद्घाटियति भवद्भिरनेया स्थिताया न कोप्युपद्रवो भविष्यति ततस्ता लात्वा सा यात्रिकावीतभय पत्तन प्राप्ता तत्रोद्दायन राजा तापसभक्तस्तस्य सामञ्जूषादत्ता कथितश्च सुरवचन मिलितश्च तत्र ब्राह्मणादिको भूरिलोक भणति च गोविन्दाय

नम· प्रत्युता मंजूषानोद्घाटिता तत केचिद्भणन्ति अत्र देवाधिदेवश्चतुर्मुखो ब्रह्मास्ति अन्ये केचिद्वदन्ति अत चतुर्भुजो विष्णुरेवास्ति केचिज्जगुः ति अत्र महेश्वरो देवाधिदेवोस्ति अस्मिन्नवसरे तत्रोदायन राजपट्टराज्ञी चेटकराजा पुत्री प्रभावती नाम्नी श्रमणोपासिका तत्रायाता तया तस्या मंजूषाया: पजां कृत्वा एवं भणति गयराग दोसमोहो सव्वन्नू अट्ठपाडिहेरसंजुत्तो देवाहिदेव गुरुओ अइरामे दंसणंदेउ १ एवं उक्ता तया मंजूषायां हस्तेन परशु प्रहारोद्दत उद्घाटिता सामंजूषा तस्यां दृष्टाऽतीव सुन्दरा स्नान पुष्पमालालंकृता श्रीवर्द्धमानस्वामि प्रतिमाजात जिनशासनोन्नतिः अतीवानन्दिता प्रभावती एवंनभाण सव्वन्नू सव्वदंसण अपुण भवभविय जिणमणाणंदजय चिन्तामणिजय गुरुजय २ जिणवीर अकलपी१ तत्र प्रभावत्या अन्त पुर मध्ये चैत्यगृहंकारितं तत्रेयं प्रतिमास्थापिता तां चत्रिकालं सा पविता पूजयति अन्यदा प्रभावतीराज्ञी तत्प्रतिमाया: पुरोनृत्यति राजा च वीणां वादयति तदानीं स राजा तस्यां मस्तकं न पश्यति राज्ञोऽधृतिर्जाता हस्ताद्वीणा पतिता राज्ञा पृष्टं किं मयादुष्टं नर्त्तितं राजा मौनमालंब्यस्थित: राज्ञा प्रति निर्बंधे उक्तवान् यत्तव मस्तकमपश्यन्नहं व्याकुलीभूतो हस्ताद्वीणां पातितवान् सा भणति मया सुचिरं श्रावकधर्मः न काचिन्मम मरणा द्भीतिरस्ति अन्यदा तत् प्रतिमा पूजनार्थं स्नाता सा राज्ञी स्वचेटीं प्रतिवस्त्राण्यानयेत्युवाच तया च रक्तानि वस्त्राण्यानी तानि राज्ञी क्रुद्धाप्राह जिनगृहे प्रविशन्त्या मम रक्तानि वस्त्राणि ददासीत्युक्त्वा चेटीं आदर्शेण हतवती मर्मणि तत्प्रहार लग्नात् सा मृता प्रभावत्या चिन्तितं हामया निरपराधत्रस जीव वधकरणाद्व्रतं भग्नं अतःपरं किंमे जीवतव्येन ततस्तया राज्ञाराज्ञ उक्तं अहं भक्तं प्रत्याख्यामि राज्ञानेयेति प्रतिपादितं तया पुनस्तत्रैवोच्यते तदा राज्ञा उक्तं यदित्वं देवी भूत्वा मां प्रतिबोधयसि तदा त्वं भक्तं प्रत्याख्याहि राज्ञा तद्वचोंगी कृतं भक्तं प्रत्याख्याय समाधिना मृता देवलोकंगता देवीभूत् तां च प्रतिमां कुब्जा देवदत्तादासी त्रिकालं पूजयति प्रभावती देवस्तु उदायनं राजानं प्रतिबोधयति न च सतं बुध्यते राजा तु तापसभक्तोत:

सदेव श्रापस सहूय कत्वाऽमृतफलानि गृहीत्वागतो राज्ञे दत्तवान् राज्ञा तानि आस्वादतानि पृष्टय तापस क एतानि फलानि तापसो भणति एतन्नगराभ्यर्णेऽस्मदाश्रमस्ति तत्र तानि फलानि सन्ति राजा तेन सम एकाक्येव तत्र गत तापसैस्समाचारे सद्दन्तु मारब्ध राजा ततो नष्ट तस्मिन्नेव वने जैन साधून् ददर्श तेषामसोशरणमाश्रित भय माकुर्व्विति राज्वासित तापसा निहत्ता साधुभिश्च तस्यैव धर्म उक्त धम्मोचेवेत्य सत्ताण सरण भवसायरे देव धम्म गुरु चेव धम्मइत्थोय परिक्लए १ दस अट्ठ दोसरहिश्रो देवोधम्मो विनिउणदय सहिश्रो सुगुरुयबभयारी आरभ परिग्गहावरश्रो२ इत्यादिकोपदेशेन स राजा प्रतिबोधित प्रतिपन्नो जिनधर्म प्रभावतीदेव आत्मान दर्शयित्वा राजान च स्थिरीकत्वा स्वस्थानंगत एव उदायन राजा श्रावकोजात इतश्च गन्धारदेश वास्तव्य सत्यनामा श्रावक सर्वत्र जिनजन्म भूम्यादितीर्थानिवन्दमानो वैताढ्य यावद्गत तत्र शाश्वत प्रतिमा वन्द नार्थं उपवासत्रय कृतवान् तपस्तुष्टया तदधिष्टाढ देव्यास्तस्य शाश्वतजिन प्रतिमादर्शिता तेन च वन्दिता अथ तया देव्यास्तस्मै श्रावकायकामित गुटिकादत्ता तत स निवृत्तो वीतभयपत्तने जीवितस्वामि प्रतिमा वन्दितु मायात गोशीर्ष चन्दनमयीं ता ववन्दे दैवात्तस्यातीसारो रोग उत्पन्न कुब्जया दास्या प्रतिचरित ॥ निरुगजात तुष्टेन तेन तस्यै कामगुणिता गुटिकादत्ता कथितश्च तासा चिन्तितार्थ साधक प्रभाव अन्यदासादासो अह सुवर्ण वर्णा सुरूपा भवामीति चिन्तयित्वा एका गुटिका भक्षितवती सुवर्णवर्णा सुरूपा च जाता ततस्तस्या सुवर्णगुलिकेति नाम जात अनन्तर सा चिन्तयति भोगसुख मनुभवामि एष उदायन राजा ममपिता अपरेमत्तुल्या केपि राजानो न सन्तीति चण्डप्रद्योतमेव मनसि कृत्वा द्वितीया गुटिका भक्षितवती तदानी तस्य चण्डप्रद्योतस्य स्वप्ने देवतया कथित वीत भयपत्तने उदायनराज्ञो दासी सुवर्णगुलिकानाम्नी सुवर्णा वर्णाऽतीव रूपवती त्वद्योग्यास्ति चण्डप्रद्योतेन सुवर्णगुलिकाया समीपे दूत प्रेषित दूतेन एकान्ते तस्या एवकथित चण्डप्रद्योतस्वामी त्वत्ते तया भणित अत्र चण्डप्रद्योत प्रथम मायातु त

पश्यामि पश्चाद्यथा रुच्यातेन सहायास्यामि दूतेन गत्वा तस्या वचनं चण्डप्रद्योतस्योक्तं सोपि अनिलगिरि हस्तिनमधि रुह्य रात्री तत्रायातः पृष्टस्तया रुचितश्च सा भणति यदीमां प्रतिमां साढं नयसि तदाह मायामि नानयेति ततस्तेन तत्स्थान स्थापनयोग्यानया प्रतिमा तदानीं नास्तीति तस्यां रात्री तत्र उषित्वा स्व नगरे पश्चाद्गत तत्र तादृशीं जिन प्रतिमां कारयित्वा पुन रत्रायात स्वां प्रतिमां तत्रस्थापयित्वा मूल प्रतिमां दासीं च गृहीत्वा उज्जयिनींगतः तत्रानलगिरिणा मूत्र पुरीषे कृते तद्गन्धेन वीत भयपत्तन सत्का हस्तिनो निर्मदाजाता उदायनराज्ञया तत्कारणं गवेषितं अनल गिरि हस्तिन पदं दृष्टं उदायने न चिन्तितं स किमर्थं मत्रायात गृहमानुषैरुक्तं सुवर्णगुलिकान दृश्यते राजा उक्तं चेटी चण्डप्रद्योतेन गृहीता प्रतिमां विलोकयततैरुक्तं प्रतिमादृश्यते परं पुष्पाणि म्लानि दृश्यन्ते राज्ञा गत्वा स्वयं प्रतिमाविलोकिता पुष्पम्लान दर्शनेन राज्ञा ज्ञातं नेयं सा प्रतिमा किं त्वनेयति विषन्नेन राज्ञा दूतश्चण्ड प्रद्योतांतिके प्रेषितः मम दास्या नास्तिकार्यं प्रतिमां त्वरितं प्रेषयेति दूतेन चण्डप्रद्योतस्योक्तं चण्डप्रद्योतः प्रतिमां नार्पयति तदा सैन्येन समं ज्येष्टमास एवोदयनश्चलितः यावन्मरुदेशे तत्सैन्यमायातं तावज्जला भावात् तत्सैन्यं तृषाक्रान्तं व्याकुलीबभूव तदानीं राज्ञा प्रभावती देवश्चिन्तितं तेन समागत्यत्रीणि पुष्कराणि कृतानितेषु जललाभात् सर्व्वं सैन्यं सुस्थं जातं क्रमेण उदायन राजा उज्जयिनींगतः कथितवांश्च भो चण्डप्रद्योत तव ममचसाक्षात् युद्धं भवतु लोकेन मारितेन अश्वस्थेन रथस्थेन वा त्वया मया च युद्धमंगी कुरुचण्ड प्रद्योतेनोक्तं रथस्थे नैव त्वया मया चयोद्धव्यं प्रभाते चण्डप्रद्योतः कपटं कृतवान् स्वय अनलगिरि हस्तिन मारुह्य संग्रामांगणे समायातः उदायनस्तु स्वप्रतिज्ञानि र्वाहो रथारूढः संग्रामांगणे समायतः तदानी मुदायनेन चण्डप्रद्योतस्य उक्तं त्वमसत्य प्रतिज्ञोजातः कपटं च कृतवानसि तथापि तव मत्तो मोक्षो नास्तीति भणता उदायनेन रथो मण्डल्यां क्षिप्तः चण्ड प्रद्योतेन तत् पृष्टौ अनलगिरि हस्तीवेगेन क्षिप्तः स च हस्तीयंयपाद

मुत्तिपति तत उदायन शरैर्विध्यते यावत् हस्तीभूमौनिपतित तत् स्कन्धादुत्तरन् प्रद्योतोबद्ध तस्य ललाटे मम दासीपतिरित्यक्षराणि लिखितानि तत उदायनराजाचण्ड प्रद्योतदेशेस्वाधिकारिण स्थापिता स्वय तु चण्ड प्रद्योत काष्ट पञ्जरेक्षिप्त्वा सार्द्ध च नीला स्वदेश प्रति चलित साम्प्रतिमा तु ततो न उत्तिष्ठतीति तत्रैव सामुक्त्वा अवच्छिन्न प्रयाणै चलितस्य अन्तरावर्षा काल समायातस्तेन दशोदयभिराजभिर्दूली प्राकार कृत्वा मध्ये सरचित सुनिम तत्र तिष्ठति यत्स्वयभुक्त तत् चण्डप्रद्योतस्यापि भोजयति एकदापयुं षणादि नमायाततदा उदायनेन उपवास कृत सूपकारै चण्डप्रद्योत पृथग् भोजनाय पृष्टस्ते तैवत्र मद्यपय पणादिने उदायनराजा उपोषितो स्तोति यद्भवतो रोचते तत्पच्यते चण्डप्रद्योते नोक्त ममाप्यद्योपवासोस्ति नज्ञात मया दपयुं पणादिन सूपकारैचण्ड प्रद्योतस्य उक्त उदायनराज्ञ तेनापि चिंतित जानाम्यह यथाय धूर्त्तसाधर्म्मिकोस्ति तथाप्यस्मिन् बद्धे मम पर्युषणान शुध्यति चण्ड प्रद्योतीमुक्त क्षामितश्च तद्भराच्छादननिमित्त रत्न पट्टस्तस्य मूर्द्धिबद्ध स्व विषयश्चतस्यदत्त तत प्रभृति पट्टबद्धा राजानोजाता मुकुटबद्धाश्च पूर्वमभ्यासन् वर्षा रात्रे व्यतिक्रान्ते उदायनराजातत प्रस्थित व्यापाराय योवणिग् वर्गस्तत्रायात सतत्रैवस्थित दशभीराजभिर्वासितत्वा द्दशपुर नाम नगरं प्रसिद्ध जात अन्यदा स उदायनराजा पौषधशालाया पौषधिक पौषध प्रतिपालयन् विहरति पूर्वरात्र समये च तस्यैताहशोभि प्राय समुत्पन्न धन्यानि तानि ग्रामाकरनगराणि यत्र श्रमण भगवान् श्रीमहावीरो विहरति धन्यास्तेराजेश्वर प्रभृत योये श्रमणाभगवत श्रीमहावीर स्यान्तिके कैवल प्रज्ञप्त धर्मं शृण्वन्ति पञ्चाणु व्रतिक सप्तशिक्षा व्रतिक द्वादशविध श्रावकधर्मञ्च प्रति पद्यन्ति तथा मुण्डीभूत्वा आगारात् अनगारिता प्रव्रजन्ति ततो यदि श्रमण भगवान् श्रीमहावीर पूर्वानुपूर्व्याचरन् यदीहागच्छेत् ततोह अपि भगवतोन्तिके प्रव्रजामि उदायनस्यायमध्यवसायो भगवताज्ञात प्रातश्चम्पात प्रतिनिष्क्रम्यवीत भय पत्तनस्य मृगवनोद्याने भगवान समवसृत तत्र पर्षन्मिलिता उदायनोपि तत्रायातो भगवद्दन्तिके

अहं प्रव्रजिष्यामि परं राज्यं कस्मैचिद्दास्यामीत्युक्ता भगवन्तं वन्दित्वा स्व गृहाभि मुखं चलितः भगवतापि प्रतिबंधमाकार्षीरित्युक्तं ततो हस्ति रत्नमारुह्य उदायन राजा स्वगृहे समायात तत उदायनस्यैतादृशोध्यवसायः समुत्पन्नं यद्यहं स्व पुत्रं अभीचिकुमारं राज्ये स्थापयित्वा प्रव्रजामि तदायं राज्ये जनपदे मानुष्यकेषु कामभोगेषु मूर्छितोऽनाद्यनन्तं संसारकान्तारं भ्रमिष्यति ततः श्रेयः खलु ममनिजकं केसिकुमारं राज्येस्थापयितुं एवं सम्प्रेक्ष्य शोभनेतिथि करणमुहूर्त्ते कौटुम्बिक पुरुषानकार्यं एव मवादीत् क्षिप्रमेवकेशिकुमारस्य राज्याभिषेक सामग्रीं उपस्थापयत ते. कृतायां सर्वसामग्र्यांकेशि कुमारो राज्येभिषिक्तः ततस्तत्रकेशि कुमारो राजाजात. उदायन राजा च केशि कुमार राजानं पृष्ट्वा तत् कृतनिष्क्रमणाभिषेक श्रीमहावीरांतिके प्रव्रजित बहुनिषष्टाष्टमदशमद्वादशममासार्द्धमासक्षपणादीनि तपः कर्माणि कुर्वाणोविहरति अन्यदातस्य उदायनराजर्षेः अन्तप्रान्ताहारकरणेन महान् व्याधिरुत्पन्नः वैद्यैरुक्तं दध्यौषधं कुरु स च उदायनराजर्षिर्भगवदाज्ञया एकाकीव विहरति अन्यदाविहरन् वीतभयेगतः तत्र तस्य भागनेयः केशिकुमारराजामात्यैर्भणित स्वामिन्नेष उदायन राजर्षिः परीषहादि पराभूतः प्रव्रज्यांमोक्तुकाम एकाकीव इहायातः तव राज्यं मार्गयिष्यति स प्राहदास्यामि तैरुक्तंनैष राजाधर्मः पुनः स प्राह तर्हि किंकरिष्यति ते प्राहुर्विषमिश्रमस्य दीयते राज्ञोक्तं ततस्तैरेकस्याः पशुपाल्या गृहे विषमिश्रित दधि कारितं तेषां शिष्ययातया तस्य तद्दत्तं उदायन भक्ता याचदेवतयाऽपहृतं उक्तं च तस्य देवतया मर्हर्षेतवविषं दत्तं दध्यं तस्त्येन दध्यौषधं परिहरः तद्वाक्याद्दधि परिहृतं रोगोवर्द्धितु मारब्ध पुनस्तेन दध्यौषधं कर्तुमारब्धं पुनरपि तदन्तर्विषं देवतयाऽपहृतं एवं वारत्रयं जातं अन्यदादेवता प्रमत्ता जाता तैश्च विषं दत्तं तत उदायनराजर्षिः बहूनि वर्षाणि श्रामण्य पर्यायं पालयित्वा मासक्यासंलेखनया केवलज्ञानमुत्पाद्यसिद्धस्तस्य शय्यातरः कुम्भ कारस्तदानीं कुचिद्ग्रामान्तरेकार्यार्थं गतो भूत् कुपितया च देवतया वीतभयस्योपरिपांशु वृष्टिर्मुक्ता सकलमपि पुरमाच्छादितं अद्यापि तथैवास्ति

गणातर कुश्यकारन्तु यनिपद्या मुक्ता उदाय नराजपुत्रस्य अभीचिकुमारस्य तदा अय हत्तान्तो जात यदानीं उदायन केगि कुमार राज्ये भिषिच्य प्रव्रजित ततोस्यायमध्यवसाय सप्तृपा अह मुदायनस्यैष्ट पुत्र प्रभावत्यामजस्तादृशमपि मासुक्तावेगि कुमार राज्ये भिषिच्य उदायन प्रव्रजित इत्यननानतिवेन दुःखेन पराभूतोयोतभवपत्तन मुक्ता चम्पाया कोणिकराजान उपसम्पद्यविपुलभोग समन्वितो भूत् सच अभीचिकुमार श्रमणोपासका भिगतजोयोपि उदायनराज्ञि समनुगवैरोभूत् अभीचिकुमारो वहुणि वर्षाणि श्रमणोपासकपर्याय प्रतिपाल्य अर्द्धमासिक्यासलेखनया उदायनवैरस्थान मनालोच्यकाल कृत्वाऽसुरकुमारत्वेनोत्पन्न एकपल्योपमस्थितिरस्यासोत् महाविदेहे क्षेत्रे चात्सेत्स्यतीति उदायन कथा तहेवकासीराया सेजसच्च परक्कमो कामभोए परिचज्ज पहगोकम्ममहावण ४९ हे मुने तथैव ते नेव प्रकारेण पूर्वोक्त नृपवत् काशिदेशपतिर्नन्दननामाराजा सप्तमबलदेव कर्म रूप महावन प्राहनत् उन्मूलया मासेत्यर्थ कि कृत्वा भोगान् परित्यज्य कोदृशोनन्दन श्रेय सत्यपराक्रम श्रेय कल्याण कारक यस्तस्य सयम श्रेय सत्य तत्र पराक्रमो यस्य स श्रेय सत्यपराक्रम मोक्षदायकचारित्र धर्मे विहित वीर्य इत्यर्थ ४९ अत्र काशिराज दृष्टात वाराणस्यां नगर्यां अग्नि शिखोराजा तस्य जयन्त्यभिधादेवीतस्या कुक्षि समुद्भूत सप्तमबलदेवो नन्दनोनामतस्यानुजोभ्राताशेषवतीराज्ञीसुतोदत्ताख्यो वासुदेव स च पित्रा प्रदत्तराज्य साधितभरतार्द्धोनन्दनानुगतो राज्य श्रिय स्फीता अनुबभूव कालेनपट पञ्चाशद्वर्षसहस्राण्यायुरति वाह्य मृत्वादत्त पञ्चमनरक पृथिव्यामुत्पन्न नन्दनोपि च गृहीत श्रामण्य समुत्पादितकेवल प्राप्त पञ्चषष्टि वर्ष सहस्राणि जीवितमनुपाल्यमोक्षगत षट् विंशति धनू षितानयोर्देह प्रमाण

सूत्र पत्ता गइ मणुत्तर । ४८ । तहेव कासी राया सेउ सच्च परक्कमो । कामभोगे परिच्चज्ज पहणे कम्म महावणं ॥४९

भाषा काशीराजा प्रशसनीय यस्यत्र यपराक्रम प्रशसनीकछेजिहनो पराक्रम कामभोगान परित्यच्यकामभोगाने छोडोने कर्ममहावनप्राहतिसकर्मरूपजे महा

मासोदिति काशिराज दृष्टांत· तहेव विजओराया अणट्ठाकित्ति पव्वएरज्जं तु गुण समिद्धं पयहित्तु महायसो ५० हे मुने तथैव विजयो नामा, द्वितीयो बलदेवोराजा प्रव्रजितोदीचां प्रपन्न: किं कृत्वा राज्यं तु पयहित्तु इति परित्यज्य कोदृशं राज्यं गुण समृद्धं गुणैः सप्ताङ्गैः पूर्णं स्वामी१ अमात्य२ सुहृत्३ कोश ४ राष्ट्र५ दुर्ग६ बलानि७ च राज्यांगानि अथ वा गुणै इन्द्रियकामगुणैः पूर्णं कीदृशोविजय: अणट्ठा अनार्त्त: आर्त्तध्यानरहित: पुन: कोदृश: कोर्त्ति: कोर्त्त्योपलचित: अथ वा अणट्ठाकित्ती इति अनष्टाकीर्त्ति: आसमन्तात् नष्टा अकीर्त्तिर्यस्य स अनष्टाकीर्त्ति अयशोरहित: ५० अत्र विजयराज कथा द्वारावत्यां व्रह्मराजस्य पुत्र: सुभद्राकुक्षि सम्भूतो विजयो नाम द्वितीयो बलदेवोस्ति स च स्व लघु भ्रातृद्विसप्ततिवर्षशत सहस्रा युर्द्धि पृष्ट वासुदेवमरणानन्तरं श्रामण्यमङ्गीकृत्य उत्पादितकेवल ज्ञान: पञ्चसप्तति वर्ष सतसहस्राणि सर्व्वायुरति वाह्य मुक्तिं गत: सप्तति धनूंषिचानयो र्देहमानमिति विजयराजकथा तहेव वुगन्तवं किच्चा अव्वक्खित्तेणचे असा महव्वली रायरिसी आदायसिरसासिरिं ५१ तथैव महाबलनामाराजर्षि स्तृतोये भवेमोच्चं जगामेतिशेष: किं कृत्वा अव्याक्षिप्तेन चेतसास्थिरेण चित्तेन उग्रं प्रधानं तप कृत्वा पुन: किं कृत्वा सिरसामस्तकेन श्रियं चारित्र लक्ष्मीं आदाय गृहोत्वा अत्र महाबलराज्ञ कथा अत्रैवभरतचेत्रे हस्तिनागपुरं नगरमस्ति तत्र बलनाम राजा तस्य प्रभावती नाम्नी राज्ञी अन्यदा साराज्ञी प्रवरशयनो योपगतईषन्निद्रां गच्छन्ती शशाङ्कशङ्खं धवलं सिंहं स्वप्ने दृष्ट्वा प्रतिबुद्धा तत· सातुष्टा यत्र बलस्य राज्ञ: शयनीयं तत्रोपागच्छति

सूत्र

तहेव विजओ राया अणट्ठा कित्ति पव्वए। रज्जं तु गुण समिद्धं पयहित्तु महायसो। ५०। तहेवुग्गं तवं किच्चा

भाषा

वन तेहनेजुगतुं हुआ अष्टकर्म्म दूरिकया ४९ तथैव विजयोनामराजा तिमजविजयनामे राजा सर्व्वथापिगत कुकोर्त्ति: प्रव्रजित: सर्व्वथा करीने गईछे भूंडो कीर्त्ति जेहनी एहवे राजाइं दिचालोधो राज्यं गुणसमृद्धं गुणे करीने भर्यो राज्यंत्यक्त्वा महायशा महायश तेहनो धरणहार ५० तथैव

घ टीका
अ १८
५६२

त भद्र मनस्यराग कथयति तत स धनोराजात स्वप्न श्रुत्वा हृष्ट तुष्ट एव मवादीत् हे देविलया कल्याण छत् स्वप्नो हृष्ट अर्थ लाभो भोगलाभो राज्य लाभय भविष्यति एव खनु तव नवसुमासेषु सार्द्ध सप्तदिनान्यधिकेषुगतेषु कुलप्रदीप कुलतिलक सर्वलक्षण सम्पूर्णोदारको भविष्यतीति तत सापभा वती एतदर्थ श्रुत्वा हृष्टातुष्टावलस्य राज्ञस्तद्वचन स्वीकरोति राजानुज्ञया च स्वशयनीये समागच्छति तत् प्रभृति च सासुखेनगर्भमुद्वहति प्रशस्तदोहदा सापूर्णेषु सुकुमालपाणि पाद सर्वलक्षणोपेत देवकुमारोपमन्दारक प्रसूतवती तत प्रभावत्या देव्या प्रतिचारिकावल राजान विजयजयाभ्यां पुत्र जन्मनावर्द्धयन्ति ततो वलराजा एतमर्थ श्रुत्वाहृष्टतुष्टोधाराहतकदम्ब पुष्पमिव समुच्छ्वसितरोमकूपस्ता सामङ्ग प्रतिचारिकाणां मुकुटवर्ज सर्व स्व शरीरालङ्कार दद्दौमस्तकक्षपनादिक प्रीतिदान च यथेच्छ विसर्जयान् तत सवलो राजाकौटुम्बिक पुरुषानाकारयति आगतायतान् एवमवादीत् भोदेवानुप्रिया क्षिप्रमेवहस्तिनागपुरेन गरेचारकशोधन मानोन्मान प्रवर्द्धनचकुरुत वदापन घोषयत एव राजाज्ञयाते तथैव कृतवत प्राप्ते च द्वादशे दिवसे तस्य दारकस्य महाबल इति नाम चक्रु तु ततो महाबल पञ्चधात्रो परिवृतोयवर्द्धे गृहीतकलाकलापश्च यौवन मनुप्राप्त असदृश रूपलावण्यगुणो पपेतानां अष्टानां राजवरकन्यानां एकस्मिन्नेवदिवसेपाणि ग्रहणमकरोत् ततस्तस्य महाबल कुमारस्य मातापितरावतिशयेन महद्दृष्ट प्रसादोपशोभित वास भवन कारयत एताद्दृश प्रीतिदान ददतु अष्टोहिरण्य कोटय अष्टोमुकुटानि अष्टौ कुण्डलयुगलानि अष्टौहारा अष्टौगोसाहस्रिक अष्टौग्रामा

मूल अ नविखत्तेण चेअसा। महब्बलो रायरिसी आदाय सिरसा सिरिं॥ ५१॥ कह धीरे अहेऊहिं उम्मत्तुव्व महिं

भाषा उपतप ञ वा तोम र उपतपकरीने अव्याक्षिप्तेन चेतसा सावधान चित्तकरीने महाबलो राजर्षि महाबलराजऋषिग्रहवा मस्तके सयमश्रिय मस्तकने विषेनेहने मजमसिरो ५१ अथपवित्र पुनरपि उद्देशमाह कथधोर पडित अहेतुभि क्रियाभि किमधीरपश्चितभु डो क्रिया करीने उम्मत्तदवग्रथिलइव

अष्टीदासा अष्टीमदन्तिन अष्टौ सौवर्ण स्थालानि एवमन्यदपि सार स्वापतेयं मातृपितृभ्यां तस्य प्रदत्तं ततः समहाबलः प्रासादवरगतः उदारभोगान्
भुञ्जानो विचरति तस्मिंश्चकालेविमलस्वामिनः प्रपौत्रापर्म घोषो नाम अणगारः पञ्चभिरनगारशतै परिवृतो ग्रामानुग्राम विहरन् हस्तिनागपुरमागत
तस्यान्तिके नागरिकपरिषत्समागता महाबलोपि धर्म्म श्रोतु तत्रायातः श्रुत्वा च धर्म्मं वैराग्यमापन्नो महाबल कुमारोहृष्टतुष्टः त्रिर्वारं नत्वा एवमवा
दीत् हे भगवन् श्रद्दधामिनि ग्रन्थं प्रवचनं यथा भवद्भिरुक्तं सत्यमेवेति संयममार्गं मह्यमङ्गीकरिष्यामि नवरं मातापितरौ आपृच्छामि गुरवः प्रोचु
प्रतिबन्धं माकार्षी ततः समहाबलो धर्म घोषमनगार वन्दित्वाहृष्टतुष्टोरथमारुह्य हस्तिनागपुरमध्ये यत्र स्वगृहं तत्रोपगत रथात् प्रत्यवतरति
यत्रमातापितरौ तत्रोपागत्य एवमवादीत् अहो मातापितरौ मया धर्म्मघोषस्य अनगारस्य अन्तिकेधर्मः श्रुतः स च धर्मोमेऽभिरुचितः ततो महाबल
कुमारं मातापितरौ एव मवदतां पुत्रत्वं धन्यः कृतार्थश्च ततः समहाबल एवमवादीत् अहोमातापितरौ इच्छाम्यहं भवदाज्ञया प्रव्रजितुं संसार भया
दहमुद्विग्नोस्मीति ततः साप्रभवती अनिष्टामकामाम श्रुतपूर्वामिमां पुत्रवाचां श्रुत्वारोमकूपगलत्स्वेदाकीर्णं गात्राशोकभरावतपिताङ्गानि स्तेजस्का
दीनवदनाकरतलमर्दितकमलमालेवत्ताना विकीर्णकेशहस्तात् टिलाधरणी पीठेनिपतिता मूर्च्छिताच परिचारिकाभि काञ्चनकलशात् छिन्नधाराभि
रभिषिच्यमानासमाश्वासिता सतीरुदमाना एवमवादीत् त्वमस्माकं एक एव पुत्रोऽस्ति इष्टः कान्तोरत्न भूतोनिधि भूतो जीवितभूत उम्बर पुष्पवद्
र्लभोस्ततो नैवं वयमिच्छामस्तवक्षणमात मपि विप्रयोगं तत पुत्रत्वं तावद्गृहेतिष्ठ यावद्वय जीवामः अस्मासुकालगतेषु परिवर्द्धित कुलसन्तानस्त्वं
पश्चात्परिव्रजेः तत समहाबल एव मवादीत् हेमातर्यत् त्वं वदसितत्सर्वं मोहविलसितं परं मनुष्यभवेजाति जरामरण शोकाभिभूतोऽध्रुवे सन्ध्याभ्ररा
गसदृशेस्वप्नदर्शनोपमे विध्वंसन स्वभावे सम प्रीतिर्नास्ति कोजानाति हे मातः कः पूर्वं कः पश्चाद्गमिष्येति अतोहं शीघ्रमेव प्रव्रजिष्यामि ततः

सामभावती एव मवादीत् पुत्र इदन्ते शरीर विशिष्टरूपलक्षणोपपेत विज्ञान विचक्षण रोगरहित सुखोचित प्रथम यौवनस्थ वर्त्तते अतस्त्वमि
ताहश शरीर योवन गुणान् अनुभव पश्चाद्दजे तत समहावल एवमवादीत् हेमात इद मनुष्यशरीर दु खायतन विविधव्याधि ग्रस्त अस्थि
सञ्चय स्नसाजालसम्बद्ध अशो च निधान अनवस्थिताकार जनोपवीतश्च भविष्यतीति इच्छाम्यह त्वरित प्रव्रजितु तत सामभावती एवमवादीत्
पुत्र इमास्तवसर्वकलाकोमल स्वभावामार्दवार्जवक्षमाविनयगुणयुक्ताहावभावविचक्षणा सुविशुद्धशीलकुलशालिन्य प्रगल्भयश्चामनोनुकूलभावानुरक्ता
अष्टोतवभार्यास्सन्ति ताभिस्सम भोगान् भ ङ्क्ष्वपश्चाद्दय परिपाकेपरिव्रजे तत समहावल एव मवादीत् इमेखलु मानुष्यका कामभोगा उच्चार
प्रश्रवण श्लेष्मवान्तपित्तशोणित शुक्रशोणित समुद्भवा अध्रुवा क्रीडिता बहूपसर्गा कटुकविपाका दु खानुबन्धिन सिद्धि विघातकारिणास्सन्तीति सदयवाह
प्रव्रजिष्यामि पुनर्माता पितरो एव मूचतु पुत्र परपर पर्यायात् बहु हिरण्य सुवर्ण विपुलधनधान्यानि स्वयमास्वादतोऽन्येषा दानाद्युत्कृष्टाण मनुष्य
लोक सत्कार सन्मानान्यनुभवाण पश्चात्परिव्रजे तत स महावल एव मवादीत् इद सर्व हिरण्यादिक वस्तु अग्निग्राह्य राजग्राह्य दायादग्राह्य मृत्यु
ग्राह्य अध्रुव विद्युच्चञ्चल नास्य भोग केनापि ग्रहीतु शक्य इति शीघ्रमेवाह प्रव्रजिष्यामि ततो मातापितरो विषय प्रवर्त्तक वाक्यै रं हि एन रक्षितु
न शक्नुत अथ सयमोद्वेजकैर्वाक्यैरेव मूचतु पुत्र अयनिर्ग्रन्थमार्गो दुरनुचरोस्ति अत्र लोहमयायवाश्चर्व्वणीयास्सन्ति गङ्गा प्रतिश्रोतसि गन्तव्य
मस्ति समुद्रो भुजाभ्या तरणीयोस्ति दीप्ताग्निशिखाया प्रवेष्टव्यमस्ति खड्गधाराया सञ्चरणीयमस्ति पुत्र निर्ग्रन्थाना आधाकर्मिक बीजादि भोजनश्च
न वर्त्तते न कल्पते पुत्रत्व तु सुकुमालोसि सुखोचित स्त्वामिनत्व क्षुधा तृषा शीतोष्णादि परीषहोपसर्गान सोढु न समर्थोसि पुन भूमिशयन केशलोचन
अस्नान ब्रह्मचर्य भिक्षाचर्याश्च विधातु न शक्नोसि तत पुत्रत्व तावद्गृहेतिष्ठ यावद्वय जीवाम तत स महावलएव मवादीत् अय निर्ग्रन्थ मार्ग

क्लीवानां कातराणाञ्च इहलोक प्रतिबद्धानां परलोक पराङ्मुखानां दुरनुचरोस्ति न पुनर्वीरस्य निश्चितमतेः पुरुषस्य किमप्यत्र दुष्करमस्तीति मां प्रभु जानीत प्रव्रज्या ग्रहणार्थं अथ मातृपितृभ्यां तं गृहेरक्षयितुम शक्ताभ्यां आकांक्ष्येव प्रव्रज्यानुमतिर्दत्ता ततो बलिराजा कौटुम्बिक पुरुषैः हस्तिनाग पुरं बाह्याभ्यन्तरे समार्जितोपलिप्तं कारयतित महाबलं कुमारं मातापितरौ सिंहासने समारोपयत सौवर्णिक कलसानामष्टशतेन यावद्भौमे यामा मष्टशतेन सर्वर्द्धयामहान् निष्क्रमणाभिषेकोस्य कृतः पितावभाण पुत्रभणतव किं ददामि कस्य वस्तुनः सांप्रतं तवार्थः ततः स महाबल उवाच इच्छा मितात कुत्रिकापणात् एकेन लक्षेनपतद्ग्रहं एकेन लक्षेण रजोहरण एकेन लक्षेण काश्यपाकारणमिति ततोबलराजा कौटुम्बिक पुरुषै स्त्रीण्यपि वस्तूनि प्रत्येकं एकैकलक्षेण आनायितवान् ततः स काश्यपोवसुभूतिनामा बलेन राज्ञाभ्यनुज्ञातोऽष्टगुणोपोतिकेन पिनद्ध मुखश्चतुरंगुल वर्ज्जकेशान् महा बल मस्तकेचकर्त्त प्रभावतीतान् केशान् हंसलक्षण पटशाटके प्रतिक्षिपति तत्रवस्त्र स्वीर्षकस्थाने नग्यति ततः स महाबलोगोशीर्षं चन्दनानुलिप्तः सर्व्वा लङ्कार विभूषितः पुरुष सहस्रवाह्यां शिविकामारूढ एकयावरतरुण्याधृता तपत्रोद्वाभ्यां वरतरुणीभ्यां चाल्यमान वरचामरो मातृपितृभ्यां अनेक भट्ट कोटि परिवृतः प्रव्रज्या ग्रहणार्थं चलित तदानीन्तं नगरलोका एवं प्रशसन्ति धन्योयं कृतार्थोयं सुलब्ध जन्मायं महाबलकुमारोयः संसारभयोद्विग्नः सर्व्वं सांसारिकविलासमपहाय प्रथमवयः स्थएव परिव्रजति एवं लोकैः प्रशंस्यमाण प्रलोक्यमानोगुलीभिर्दृश्यमानः पुष्पफलेषु विकीर्यमाणेषु याचके भ्यश्च स्वयं दानं ददत् हस्तिनागपुर मध्यं मध्यं निर्गच्छन् धर्मघोषा नगारांतिके समायातः शिबिकातः प्रत्यवतीर्णः ततो महाबलं कुमार पुरतः कृत्वा मातापितरौ धर्म्मघोषम नगारं वन्दित्वा एव मवदतां भगवन्नेषमहाबल कुमारः संसारभयोद्विग्नः कामभोगविरक्तो भवदन्तिके प्रव्रजितु मिच्छति तत इमां शिष्य भिक्षां वय दद्मः स्वीकुर्व्वंतु भवन्त धर्म्म घोषा नगारएव मुवाच यथा सुखं देवानुप्रिया माप्रतिबन्धं कुरुत ततः स महाबलहृष्ट तुष्टो धर्म्म

